यदि[1] चैकं मतं कुर्यात्तद्विरुद्धान्यसौ तदा ।
बलात्प्रलोपयेदेव यदीच्छति नृणां शिवम् ॥ ३७ ॥
पुरुषा भिन्नदेशीया मतान्युच्चावचानि तु ।
धर्मभीत्या प्रवृत्त्यर्थं नृणां नूनमकल्पयन् ॥ ३८ ॥
अकस्मात्खात्पतद्दृष्ट्वा जलं चकितचेतसः ।
ईशोऽस्तीत्यवदन्केचिन्मूढा अनुययुश्च तान् ॥ ३९ ॥
यद्देश्याः पुरुषाः सर्वे ऐकमत्यस्वभाविनः ।
तद्देश्यानां मतमपि दृष्टमेकपथाश्रितम् ॥ ४० ॥
निसर्गाद्भिन्नमतयो यद्देश्याः सन्ति मानवाः ।
तत एव हि तद्देश्यैः कृतं बहुपथं मतम् ॥ ४१ ॥
बह्वाश्चर्याणि श्रूयन्ते यानि ग्रन्थेषु केवलम् ।
नैकमप्यधुना तेषु दृश्यते कर्हिचित्क्वचित् ॥ ४२ ॥
तथा हि मनुजैः सार्धं संवादा ईश्वरस्य च ।
अशरीरास्तथा वाचो धर्मविश्वासकारिकाः ॥ ४३ ॥
एवमाश्चर्यकर्माणि धर्मश्रद्धाप्रदानि तु ।
क्षणे क्षणे प्रजातानि श्रूयन्ते ग्रन्थमात्रतः ॥ ४४ ॥
नैकमप्यधुना कस्माद्दृश्यते धर्मकाङ्क्षिभिः ।
नृणां तद्वञ्चनायैव सर्वं धूर्तैः प्रकल्पितम् ॥ ४५ ॥
प्रमत्तानामिदं गीतं तर्कसंपर्ककर्कशम् ।
निरोद्धुं कः समर्थोऽस्ति शुष्कतर्कसमाश्रयः ॥ ४६ ॥

१ ' यदि वापि मतं '—**आ, इ.**

यद्यप्यत्र वदेत्कश्चिद् बुद्धिमान् किञ्चिदुत्तरम् ।
तस्याप्यन्यो वदेदेव नान्तस्तर्कस्य विद्यते ॥ ४७ ॥
अपहाय ततो दोषांस्तर्कदृष्टिसमीक्षितान् ।
कार्यः शास्त्रे सुविश्वास आत्मनो भद्रमिच्छता ॥ ४८ ॥
अथापि धर्मज्ञानार्थं वेदशास्त्राविरोधतः ।
नरस्तर्कं प्रयुञ्जानो न दुष्टो मनुरब्रवीत् ॥ ४९ ॥
द्विस्वभावा हि पुरुषा नास्तिका आस्तिका इति ।
यत्स्वभावो भवेद्यस्तु तथार्थं सोऽधिगच्छति ॥ ५० ॥
क्रियन्ते यादृशास्तर्का बालिशैर्धर्महन्तृभिः ।
न ते कृतधियां चित्तमधिरोहन्ति जातुचित् ॥ ५१
तर्का यद्यपि भूयांसो वाक्स्तम्भाय प्रदर्शिताः ।
तथापि विश्वरचना करोत्यास्तिकतां दृढाम् ॥ ५२ ॥
ईशो नास्तीति जल्पन्तो मूढान्मन्यन्त आस्तिकान् ।
त एव वस्तुतो बाला इति जानन्ति सूरयः ॥ ५३ ॥
तत्त्वेषु लौकिकार्थानामपि मुह्यति यन्मतिः ।
धर्मतत्त्वं दूषयन्तः किं ते न बत बालिशाः ॥ ५४ ॥
यश्च मूढतमो लोके यश्च बुद्धेः परं गतः ।
तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ ५५ ॥
भवद्भिरपि तर्केण यदि दोषाः प्रकल्पिताः ।
तावता ब्रूत किं त्याज्य एष पन्थाः सनातनः ॥ ५६ ॥

---

१ एतदादि श्लोकषट्कम् **आ** पुस्तके नास्ति, **इ** पुस्तके च शोधरूपेण पश्चाल्लिखितं दृश्यते.

को वेद धातुराकूतं तत्त्वं धर्मस्य चैव यत् ।
अन्यस्य चान्यथा भानं ननु स्वाभाविकं नृणाम् ॥५७॥[1]
कुर्युर्यद्यपि वाक्स्तम्भं कुतर्का भवदीरिताः ।
तथापि वैदिकाद्धर्मात्सतां श्रद्धा न हीयते ॥ ५८ ॥
तस्मान्मोघा भवत्तर्का अत्यल्पधिषणोद्भवाः ।
सर्वशुद्धतमं शास्त्रं श्रद्धेयं हितकाङ्क्षिभिः ॥ ५९ ॥

इति शास्त्रतत्त्वविनिर्णये शास्त्रश्रद्धावश्यकताकथनपूर्वकतर्काप्रतिष्ठाननिरूपणं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

१ अत उत्तरं "घटकुड्यादिनिर्माणे या तावच्छिल्पिनां कृतिः । सापि न ज्ञायते पुम्भिः सहसाभ्यासवर्जितैः ॥ किं पुनर्जगतां कर्तुरचिन्त्यकृतिशालिनः । ज्ञायेत सहसा तत्त्वं यच्छास्त्रेषु प्रदर्शितम् ॥ गम्भीरः शास्त्रविषयो न ग्राह्योऽल्पमनीषया । न च दूषयितुं योग्यः स्वबुद्धिकृतनिश्चयैः ॥" इति श्लोकत्रयमधिकम् आ पुस्तके इ पुस्तके त्वेतच्छ्लोकत्रय प्राग्लिखितमपि पश्चान्निष्कासितं दृश्यते.

# पञ्चमोऽध्यायः

[1]येऽर्थाः शास्त्रेषु संप्रोक्ताः सन्तस्ते किं तु दुर्गमाः ।
अवबोधाय चैतेषामुपपत्तिः प्रदर्श्यते ॥ १ ॥
ईश्वरः स्वर्गनरकौ धर्माधर्मादिकं च यत् ।
सत्यं मत्वोपपाद्यं तद् युक्त्या तदनुकूलया ॥ २ ॥
सत्यान्मत्वैव शास्त्रार्थानुपपत्त्योपपादयेत् ।
नोपपत्त्यनुरोधेन ते दूष्या इति मे मतिः ॥ ३ ॥
ननु शास्त्रप्रमाणत्वपरीक्षावश्यमर्ह्यते ।
नो चेद् धूर्तकृतं किञ्चिन्मतं मन्तव्यतां व्रजेत् ॥ ४ ॥
अत्रोच्यते—
यदि कश्चिन्महाबुद्धिः सर्वतः सूपपत्तिमत् ।
धूर्तः प्रकल्पयेच्छास्त्रं परीक्ष्येतास्य किं ततः ॥ ५ ॥
बुद्धिमन्तो नरा धूर्ताः शक्नुयुः कर्तुमीदृशम् ।
बुद्धिमान्कल्पयेद्यत्तत्सदोषं कल्पयेत्कुतः ॥ ६ ॥
अल्पमल्पकथं चैव सर्वतः सूपपत्तिमत् ।
बुद्धिमांश्चेन्मतं कुर्यात् क्रियतामस्य किं ततः ॥ ७ ॥

---

१ अतः पूर्वं 'श्रीः' इत्यधिकम् अ पुस्तके, 'हरये नमः' इति आ इ पुस्तकयोश्च.

परीक्षा सुप्रयुक्तापि नेह स्यात्कार्यकारिणी ।
सदोषार्थविहीने हि परीक्षा किं करिष्यति ॥ ८ ॥
तस्मादेवंविधाः शङ्का निरर्था एव केवलम् ।
किं त्वार्यैः संमतं यद्यत्तत्प्रमाणमिति स्थितिः ॥ ९ ॥
श्रुतिस्मृत्यादिकं शास्त्रं पूर्वैरार्यैः सुसंमतम् ।
वेदाः प्रमाणमूर्धन्या एष पन्थाः सनातनः ॥ १० ॥
वयं हि भगवद्वाचि दृढं विश्वसिमः श्रुतौ ।
श्रद्धा चलति नास्माकमप्यसत्कल्पनाशतैः ॥ ११ ॥
वेदानां भारतादेश्च शास्त्रस्य मानवस्य च ।
वाक्प्रागल्भ्यादनिर्वाच्याद् भूयः श्रद्धा विवर्धते ॥१२॥
निरुक्तब्राह्मणादीनां सूत्रादीनां तथैव च ।
वाङ्माधुर्यादनिर्वाच्याद् भूयः श्रद्धा विवर्धते॥ १३ ॥
तदेतदैश्वरं शास्त्रं प्रसन्नं गूढहेतुमत् ।
शङ्कापङ्कनिरासार्थं बोधार्थं चोपपाद्यते ॥ १४ ॥
शास्त्रानुगैवोपपत्तिर्नोपपत्त्यनुगं तु तत् ।
स्वतःप्रमाणकं शास्त्रमुपपत्तिस्तु तद्विदे ॥ १५ ॥
ईश्वरः स्वर्गनरकौ धर्माधर्मादिकं च यत् ।
सत्यं मत्वोपपाद्यं तद्युक्त्या तदनुकूलया ॥ १६ ॥
सत्यान्मत्वैव शास्त्रार्थानुपपत्त्योपपादयेत् ।
नोपपत्त्यनुरोधेन ते दूष्या इति मे मतिः ॥ १७ ॥

उपपत्त्यनुरोधाच्चेच्छास्त्रप्रामाण्यमिष्यते ।
लाघवात्स्वर्गनरकौ धर्मान्यौ च न सिध्यतः ॥ १८ ॥
ईश्वरादभवन्सर्वे यद्वा स्वपितृमातृतः ।
मृतेरूर्ध्वं विलीयन्ते लाघवादस्त्विदं वरम् ॥ १९ ॥
एतावानेव वै शास्त्रे यस्मिन्नर्थो भवेन्मतः ।
तदेव युक्तमन्यानि हेयानीत्यपि सेत्स्यति ॥ २० ॥
किमर्थौ स्वर्गनरकौ धर्माधर्मकथा वृथा ।
यावज्जीवमुषित्वेह लीयन्त इति लाघवात् ॥ २१ ॥
नाधर्मप्रभवं दुःखं न धर्मप्रभवं सुखम् ।
तत्तत्संयोगजं दुःखं तत्तत्संयोगजं सुखम् ॥ २२ ॥
शीताद्यर्थान्सेवमानः पीड्यते च ज्वरादिभिः ।
स्वाद्वन्नमथ भुञ्जानो नीरोगः सुखमेधते ॥ २३ ॥
तदेवं युक्तिसिद्धाभिर्बह्वीभिरुपपत्तिभिः ।
दूष्यन्तां किमु शास्त्रोक्ता अर्था धर्मादिकास्तु ये ॥ २४ ॥
किं तु शास्त्रेषु ये प्रोक्ता अर्थाः साधव एव ते ।
इति मत्वोपपत्तिस्तु तद्बोधाय प्रयुज्यताम् ॥ २५ ॥
योऽयं शास्त्रोदितोऽर्थोऽसौ संभवेद्वा न संभवेत् ।
इति शङ्कानिरासार्थं बोधार्थं चोपपाद्यते ॥ २६ ॥
सुग्रहो जायते ह्यर्थो दृष्टान्ताद्यैर्निरूपितः ।
असंभवादिशङ्काश्च गच्छन्त्यर्थोपपादनात् ॥ २७ ॥

तथा हि लोकनृपतिदृष्टान्तादिभिरीश्वरः ।
तत्तत्कर्मफलं यच्छत्येवमादि प्रबोध्यते ॥ २८ ॥
अर्थधर्मादिकं सत्यं मत्वा शास्त्रैकमानतः ।
सिद्धस्यैव गतिर्ह्येषा दृष्टान्ताद्यैः प्रकल्प्यते ॥ २९ ॥
तिरस्क्रियेत चेच्छास्त्रवचो धर्मादिबोधकम् ।
तथापि तर्कसिद्धाया उपपत्तेस्तु न क्षतिः ॥ ३० ॥
यथा राजा प्रजाकर्मफलं यच्छति वै तथा ।
ईश्वरेणापि तद्देयमित्येवं नियमः कुतः ॥ ३१ ॥
क्रीडार्थमीश्वरोऽस्राक्षील्लोकांस्ते मृत्यनन्तरम् ।
मुच्यन्त इत्येव परं लाघवादुपपद्यते ॥ ३२ ॥
किं च सृष्टेः पूर्वकाले नासञ्जीवास्तु केचन ।
असन्तः स्वेच्छया सृष्टा ईशेनेति भवन्मतम् ॥ ३३ ॥
इत्थमीशेन सृष्टेषु तेषु पापकृतां नृणाम् ।
अनन्तो नरके वास इति तावदसंभवि ॥ ३४ ॥
कथमीशस्त्रिकालज्ञस्तेषां वै दोषशालिताम् ।
भविष्यत्कालिकीं जानन्दुःखभोगाय तान्सृजेत् ॥ ३५ ॥
मत्सृष्टेषु भविष्यन्ति खल्वेते पापबुद्धयः ।
ततोऽतिदुःखभोक्तार इति जानन्कथं सृजेत् ॥ ३६ ॥
न हि दोषावहं वस्तु प्राकृतोऽपि सिसृक्षति ।
दयालुश्च भविष्यज्ज्ञः कथं दुःखाय तान्सृजेत् ॥ ३७ ॥

ये तावदीशसृष्टेषु स्वर्गतास्तज्जनुर्वरम् ।
ये पुनर्नरकावासास्तेषां सृष्टिर्निरर्थिका ॥ ३८ ॥
कथं नु दुःखभाजः स्युः सृज्येरन्नैव ते यदि ।
न दयालोरिदं योग्यं सृष्ट्वा तद्दुःखदर्शनम् ॥ ३९ ॥
तस्मान्न स्वर्गनरकौ धर्माधर्मौ निरर्थकौ ।
उपपत्त्या त्विदं सिध्येच्छास्त्रं चेदवमन्यते ॥ ४० ॥
नन्वीश्वरः कर्मफलं न दद्याद्यदि चेत्तदा ।
प्रजा भवेयुरुद्वृत्ता इत्येतत्सोपपत्तिकम् ॥ ४१ ॥
अत्रोच्यते—
कर्मणः फलमस्तीति सर्वे जानन्ति यद्यपि ।
तथापि लोके दुर्वृत्ताः सन्त्येव बहवो नराः ॥ ४२ ॥
ये तावत्साधवो लोके ते तु सद्वृत्तमास्थिताः ।
अथ दुष्टस्वभावानां न स्वप्ने पापजं भयम् ॥ ४३ ॥
तथा धर्माद्यभावेऽपि ये तावत्सत्स्वभाविनः ।
परदुःखानि जानन्तः पीडयेयुर्न ते परान् ॥ ४४ ॥
अथ दुष्टस्वभावा ये निर्घृणाः परपीडकाः ।
तेषां सत्त्वेऽप्यसत्त्वे वा वृत्तं तूभयथा समम् ॥ ४५ ॥
किं न चार्वाकलोकेषु व्यवहारः प्रवर्तते ।
न ते धर्ममधर्मं वा मन्यन्ते नारकं भयम् ॥ ४६ ॥
स्याद्वेदमीश्वरस्यैव सामर्थ्यं किञ्चिदद्भुतम् ।
व्यवहारो निराबाधो येन लोके प्रवर्तते ॥ ४७ ॥

किं च धर्माधर्मफलं नराणां सत्प्रवृत्तये ।
भवन्मतानुसारेण सर्वथैतन्न सिध्यति ॥ ४८ ॥
भवन्तः खलु मन्यन्ते वयमेव हि धार्मिकाः ।
मतान्तरानुसारिण्यः प्रजास्तूत्पथगा इति ॥ ४९ ॥
तस्माद्धर्माधर्मफलं यद्यपीशेन निर्मितम् ।
तथाप्युत्पथगामित्वं प्रजानां तदवस्थिति ॥ ५० ॥
धर्माधर्मफलं तस्मान्नास्त्येव नरकादिकम् ।
किं तु जीवा मृतेरूर्ध्वं मुक्ता इत्यस्तु लाघवात् ॥ ५१ ॥
उपपत्तिवशादेवं लाघवाद्यनुरोधतः ।
सर्वो लुप्यति शास्त्रार्थो यद्यसाववमन्यते ॥ ५२ ॥
तस्माच्छास्त्रेषु ये प्रोक्ता अर्थास्तदनुकूलगा ।
उपपत्तिः प्रयोक्तव्या न विरुद्धा तु कर्हिचित् ॥ ५३ ॥
अतो वेदपुराणादौ ये येऽर्थाः प्रतिपादिताः ।
सत्या एवोपपत्तिस्तु तद्बोधाय प्रकल्प्यते ॥ ५४ ॥
काचित्तत्रोपपत्तिश्च दूष्या स्यादपि चेद्यदि ।
न दूष्यं तावता शास्त्रमन्यथैवोपपाद्यताम् ॥ ५५ ॥
शास्त्रानुगैवोपपत्तिर्नोपपत्त्यनुगं तु तत् ।
स्वतःप्रमाणकं शास्त्रमुपपत्तिस्तु तद्विदे ॥ ५६ ॥
को वेद धातुराकूतं तत्त्वं धर्मस्य चैव यत् ।
अन्यस्य चान्यथा भानं ननु स्वाभाविकं नृणाम् ॥ ५७ ॥

लोके बुद्धिमतां कृत्यं ज्ञायते नाल्पबुद्धिभिः ।
बुद्धिमद्भ्योऽपि सर्वेभ्यो भगवान्बुद्धिमत्तरः ॥ ५८ ॥
काश्चिदत्र प्रवक्ष्यन्ते मया या उपपत्तयः ।
न च तावत्य एव स्युरन्यासामपि संभवात् ॥ ५९ ॥
काचिद् दूष्या यदि भवेन्मयोक्तासूपपत्तिषु ।
अन्यास्तत्र प्रकल्प्यन्तां न दूष्यं त्वैश्वरं वचः ॥ ६० ॥
अन्या अपि स्युरत्रार्थे निश्चयेनोपपत्तयः ।
मया त्वत्र प्रदर्श्यन्ते आत्मज्ञानानुसारतः ॥ ६१ ॥

इति शास्त्रतत्त्वविनिर्णये शास्त्रस्योपपत्तिनिरपेक्षस्वतःप्रामाण्यनिरूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥

# षष्ठोऽध्यायः

(पूर्वार्धम्)

तथा हि शास्त्रदृष्टानां बहुत्वादध्वनां तु यः ।
दोषः प्रतीयते तत्र समाधानमिदं शृणु ॥ १ ॥
यद्यपीश्वररूपस्य यथार्थज्ञानमेककम् ।
मुक्तेः साधनमित्याहुर्न प्रकारान्तरं क्वचित् ॥ २ ॥
यथार्थभगवद्रूपावबोधे चैककारणम् ।
वेदान्ता इति सिद्धान्तः श्रुतिषु स्मरणेषु च ॥ ३ ॥
यथार्थं भगवद्रूपं यथा वेदान्तदर्शने ।
कथ्यते तदिहास्माभिरुपरिष्टात्प्रवक्ष्यते ॥ ४ ॥
तथापि मन्दबुद्धीनां तर्कदूषितसंविदाम् ।
न येषामधिकारोऽस्ति तत्त्वे वेदान्तबोधिते ॥ ५ ॥
श्रेयस्तेषामपि भवत्विति मत्वा दयालुना ।
कृताः शास्त्रान्तराध्वानः सर्वेषां हितमिच्छता ॥ ६ ॥
अतर्क्यसदसत्कर्मपरिपाकवशान्नृणाम् ।
आनन्त्यमधिकाराणामुत्तमाधमरूपिणाम् ॥ ७ ॥
दृश्यन्ते पुरुषा लोके येषां वेदान्तदर्शने ।
शुद्धेऽपि श्रुतिसिद्धेऽपि श्रद्धाभावोऽधिकारजः ॥ ८ ॥
तथा हीश्वरकृष्णाद्याः साङ्ख्यमेव गतिं विदुः ।
तर्कविद्यामथ परेऽमन्यन्तोदयनादयः ॥ ९ ॥

एवमन्येऽपि बहवस्तर्कान्दोलितचेतसः ।
नानामार्गान्प्रपद्यन्ते हेतुवादपरायणाः ॥ १० ॥
अनवाप्ताधिकारास्ते वेदान्तार्थावगाहने ।
उपासमाना गोविन्दं स्वस्वदृष्ट्यनुसारतः ॥ ११ ॥
कालेनाप्ताधिकारास्ते ईशोपासनगौरवात् ।
याथार्थ्येन हरिं ज्ञात्वा मुच्यन्ते सर्वबन्धनात् ॥ १२ ॥
ये चैते बहवो मार्गा मन्दबोधप्रयोजनाः ।
वेदान्तबोधद्वारैव तेषां मोक्षे समन्वयः ॥ १३ ॥
नन्वेवमधिकाराणामानन्त्यादध्वनामपि ।
बहुत्वेऽपि कथं तेषां विरोध उपपद्यते ॥ १४ ॥
विरुद्धैरध्वभिर्यान्त एकमर्थं कथं नराः ।
लभेरन्नथ सर्वेषां प्रामाण्यं च सकृत्कथम् ॥ १५ ॥

अत्रोच्यते—

मन्दानां तत्त्वबोधाय शाखादिभिरिवोडुराट् ।
बहुप्रकारैरीशोऽपि वर्ण्यते दर्शनान्तरैः ॥ १६ ॥
शुद्धं भगवतो रूपमाह वेदान्तदर्शनम् ।
तद्विरोधे न तात्पर्यमन्येषां किं तु बोधने ॥ १७ ॥
यथा ह्येकः पुमानाह प्रासादे दृश्यते विधुः ।
अन्यो वदति शाखायां पश्य चन्द्रमसं त्विति ॥ १८ ॥
विरुद्धेऽपि तयोर्वाक्ये सकृत्प्रामाण्यशालिनी ।
सूक्ष्मार्थबोधैकार्थत्वात्तथा शास्त्रेऽपि बुध्यताम् ॥ १९ ॥

किं चाधिकारभेदेन भवेन्मार्गविरोधिता ।
स्थानभेदाद्यतो लोके विरोधो दृश्यतेऽध्वनाम् ॥ २० ॥
यथा काशीं जिगमिषुर्गयास्थो यदि पृच्छति ।
तत्रत्यांस्ते ब्रुवन्त्येनं व्रज त्वं पश्चिमां दिशम् ॥ २१ ॥
अथ प्रयागदेशीयः काशीगमनकाम्यया ।
पृच्छञ्जनांस्तु तत्रत्यैः प्राचीं याहीति चोच्यते ॥ २२ ॥
प्राचीपश्चिमगामित्वं विरुद्धमपि सर्वथा ।
भिन्नदेशस्थितेर्हेतोः फलमेकं प्रयच्छति ॥ २३ ॥
तथैवातर्क्यसदसत्कर्मणां परिपाकतः ।
नृभ्यो भिन्नाधिकारेभ्यो नैकोऽध्वा प्रदिशेत्फलम् ॥ २४ ॥
इति संचिन्त्य भगवान् करुणावरुणालयः ।
मार्गान्नानाविधांश्चक्रे यैः सर्वे श्रेय आप्नुयुः ॥ २५ ॥
तथा हि सर्वशास्त्रेषु साङ्ख्यकाणादकादिषु ।
तथैव वैष्णवाद्येषूपासामार्गेषु सर्वशः ॥ २६ ॥
पराकृतस्वदोषेषु बहुयुक्तिनिरूपणैः ।
काणादं मन्वते केचित्केचित्साङ्ख्यादिकान्यपि ॥ २७ ॥
केचित्त वैष्णवं मार्गमन्ये शैवादिकांस्तथा ।
पुंसां भिन्नाधिकारित्वस्याभिव्यञ्जकमस्त्यदः ॥ २८ ॥
किं च यस्माज्जगन्नाथश्चक्रे मार्गान्पृथग्विधान् ।
भिन्नाधिकाराः पुरुषा इत्यस्मादपि निश्चितम् ॥ २९ ॥

शास्त्रानुगैवोपपत्तिर्नोपपत्त्यनुगं हि तत् ।
इति यत्प्रागिह प्रोक्तं तच्च ध्येयं क्षणे क्षणे ॥ ३० ॥
यस्मिन् यस्य भवेन्मार्गे रुचिः शास्त्रेण बोधिते ।
तस्मिंस्तस्याधिकारोऽस्तीत्यधिकारस्य बोधकम् ॥ ३१ ॥
इदं च पश्यतेशस्य सामर्थ्यं यदसौ जनः ।
विरोधिष्वपि शास्त्रेषु स्वाधिकारानुसारतः ॥ ३२ ॥
एकं निश्चित्य गृह्णाति न तु मोहं प्रपद्यते ।
एतेन मोहकृच्छास्त्रं नैशमित्यपि खण्डितम् ॥ ३३ ॥
तस्माच्छास्त्रीयमार्गाणां विरोधोऽपि न दोषभाक् ।
फलं चैकं प्रयच्छन्ति दृष्टान्तं तत्र तं स्मर ॥ ३४ ॥
अत आज्ञास्वरूपाणि शास्त्राणि परमेशितुः ।
आदिशन्ति बहून्मार्गान्दोषवन्ति न कर्हिचित् ॥ ३५ ॥
तथैव वैष्णवादीनां मार्गाणां च निदर्शने ।
तस्य तस्यैव माहात्म्यवर्णनं च न दुष्यति ॥ ३६ ॥
तथा ह्येकं परेशानं नानोपाध्युपलक्षणैः ।
बहुधोपदिशन्ति स्म तत्तद्रुच्यनुसारतः ॥ ३७ ॥
न चाप्युपाधिसंबन्धो भवेदीशस्य तावता ।
दुर्ज्ञाने मन्दधीगत्यै तस्य शास्त्रैरुदीरणात् ॥ ३८ ॥
ननु चोपाधिसंबन्धो यद्यलीको भवेत्तदा ।
असत्याशंसिना भाव्यं कथमैशेन तद्वद ॥ ३९ ॥

उच्यते—

दृष्टा किलेयं शिष्टानां रीतिः सूक्ष्मार्थबुद्धये ।
असत्संबन्धकथनं शाखाचन्द्रमसोरिव ॥ ४० ॥
ईशो हि सर्वशिष्टानामाद्यो रीतिप्रवर्तकः ।
दयावान्मन्दबुद्धीनां स्वस्याप्त्यै तदकल्पयत् ॥ ४१ ॥
किं त्वेक एव मार्गेषु मार्गः साक्षात्फलप्रदः ।
स एव सेव्यते सर्वैर्जनैः शुद्धाधिकारिभिः ॥ ४२ ॥
तद्द्वारा प्रापकाश्चान्ये मता मन्दाधिकारिणाम् ।
तत्त्वं तु विरलास्तस्य श्रद्दधाना जना विदुः ॥ ४३ ॥
यथा प्रयागनिलयः क्षिप्रं प्राप्नोति काशिकाम् ।
चित्रकूटनिवासानां प्रयागद्वारिका गतिः ॥ ४४ ॥
नन्वेवं मार्गभेदेऽपि न वस्तुनि विकल्पना ।
भवेत्तर्हि पुराणेषु कथाभेदः कथं स्थितः ॥ ४५ ॥

उच्यते—

कृतैव कल्पभेदेन कथाभेदव्यवस्थितिः ।
इतोऽन्यदुत्तरं यत्स्याद्भवतैव तदुच्यताम् ॥ ४६ ॥
पौराणिकानामज्ञानान्न युक्ता तस्य कल्पना ।
परस्परपुराणार्थान् सर्वे जानन्ति ते यतः ॥ ४७ ॥
सर्वेष्वपि पुराणेषु सर्वेषां नामदर्शनात् ।
एककालोद्भवस्तेषां कर्तुर्ज्ञानं च तर्क्यते ॥ ४८ ॥

न हि जानन्विरुद्धार्थं वक्तुमीहेत कर्हिचित् ।
स्वार्थाप्रचारणाद्बिभ्यत् किं पश्यन्गर्ते आपतेत् ॥ ४९ ॥
न वा मताभिमानस्य युज्यते तत्र हेतुता ।
असंभवदहंकारा भिद्यन्ते हि कथा अपि ॥ ५० ॥
रामात्क्वचिल्लक्ष्मणाच्च मृतिः कुम्भश्रुतेः श्रुता ।
कथं स्यादभिमानोऽत्र को वार्थः कस्य हीयते ॥ ५१ ॥
किं च द्वयोर्विवदतोरभिमानो भवेदपि ।
ऋग्वेदे पुनरेकस्यामृचि प्रोक्तं कथाद्वयम् ॥ ५२ ॥
अदितेर्दक्षजन्यत्वं दक्षस्यादितिजन्यता ।
अर्थेऽपि चैकर्गुक्तेऽस्मिन्नभिमानः कथं भवेत् ॥५३॥
एकस्मिन्नेव च ग्रन्थे क्वचिदर्थद्वये क्षणात् ।
न विरोधेऽस्ति तात्पर्यमिति किं नावबुध्यते ॥ ५४ ॥
नन्वेकस्य स्तुतावन्यनिन्दा या परिदृश्यते ।
दोष आभाति सोऽस्माकमिति चेदुच्यते शृणु ॥ ५५ ॥
अहो ते कुशला बुद्धिरिति क्रोधपुरस्सरम् ।
वचो न भजति स्वार्थं किं तु गर्हापरं हि तत् ॥ ५६ ॥
तस्मान्नैवप्रतीतार्थः सर्वत्र परिगृह्यते ।
लोकेऽपि व्यवहारोऽसौ का तु शास्त्रे विचारणा ॥५७॥
किं तु लौकिकवाक्यस्य सुलभोऽस्त्याशयग्रहः ।
गम्भीरस्य तु शास्त्रस्य न्यायसाहाय्यतो भवेत् ॥ ५८ ॥

तथा च न हि निन्दाख्यन्यायस्य परिशीलनात् ।
तस्य शास्त्रस्यखल्वेवमभिप्रायः प्रतीयते ॥ ५९ ॥
अन्येषामवमत्वोक्तिं विना स्तुत्यप्रशंसनम् ।
निरङ्कुशं न हि भवेदिति स्तुतिपरं हि तत् ॥ ६० ॥
अत एव हि सर्वत्र श्रुतेः प्रामाण्यमुच्यते ।
क्वचिदन्यप्रशंसायां गुणवाद इतीर्यते ॥ ६१ ॥
तथैव गङ्गास्नानादेर्यात्रामूर्त्यर्चनादिनः ।
उक्तेऽपि पुण्यहेतुत्वे निषेधो यः क्वचित्स्थितः ॥ ६२ ॥
तस्यापि खलु तात्पर्यं विदुस्तात्पर्यवेदिनः ।
चित्तशुद्धिमनोदान्तीश्वरज्ञानादिसंस्तवे ॥ ६३ ॥
तथा हि सूक्ष्मबुद्ध्यैतच्छ्रद्धया च विचार्यताम् ।
न खल्वाकस्मिकी निन्दा मूर्त्यर्चादेः कृता क्वचित् ॥ ६४ ॥
किं तु हृच्छोधनादीनां प्रस्तावेष्वेव दृश्यते ।
न चाभिमानमूलत्वशङ्कायाश्चात्र संभवः ॥ ६५ ॥
एषैव रीतिरन्यासां निन्दानामपि दृश्यते ।
तस्माद्विरोधे तात्पर्यं न तासां किं तु तत्स्तुतौ ॥ ६६ ॥
एकस्मिन्नेव च ग्रन्थे मिथो न्यूनत्वदर्शनात् ।
न विरोधेऽस्ति तात्पर्यमिति किं नावबुध्यते ॥ ६७ ॥
एवं विष्ण्ववताराणां शाक्तत्वं प्रोच्यते क्वचित् ।
तं च शक्तिप्रशंसार्थमर्थवादं प्रचक्षते ॥ ६८ ॥

भूयोऽभ्यस्तार्थतो यो हि विरुद्धोऽर्थः प्रतीयते।
तमर्थवाद इत्याहुः प्रशंसैकप्रयोजनम् ॥ ६९ ॥
विरोधे तुल्यबलयोः कल्पभेदाद्व्यवस्थितिः ।
इत्थं शास्त्राशयोऽगम्यो न्यायसाहाय्यमन्तरा ॥ ७० ॥
तस्मादगम्यशास्त्रीयविषयेष्वल्पबुद्धिभिः ।
न वाच्यः सहसा दोषो बुद्धेरल्पत्वमूह्यताम् ॥ ७१ ॥
अथो चतुर्षु वेदेषु शङ्कन्ते यत्परे जनाः ।
भाषाभेदकृतं दोषं तं तु नोपलभामहे ॥ ७२ ॥
चतुर्वेदीयमन्त्राणां ब्राह्मणानां तथैव च ।
वेदान्तानामपि तथा भाषैकैवोपलभ्यते ॥ ७३ ॥
अथाथर्वणवेदीयोपनिषत्सु तु कासुचित् ।
भाषा श्रुतिविजातीया दृश्यते लौकिकीति चेत् ॥७४॥
आस्तां किं तावता वेदमहिमा क्षतिमृच्छति ।
अपि चोरैः समाक्रान्तः किं साधुरपि दूष्यते ॥ ७५ ॥
विचित्रे हि जगत्यस्मिञ्जना नानाविधाः स्थिताः ।
कः किं करिष्यतीत्यस्य ज्ञाता को नाम विद्यते ॥ ७६ ॥
का स्त्री त्याज्या भुजङ्गानां किमग्राह्यं च लोभिनाम् ।
को न तुच्छो मदान्धानां किमकार्यं दुरात्मनाम् ॥७७॥
न तावता तु वेदानां हीयेत महिमा क्वचित् ।
न हि काचशतैर्व्याप्तं रत्नं मौल्येन हीयते ॥ ७८ ॥

अथ मन्त्रब्राह्मणानां वेदान्तानां च वै मिथः ।
किञ्चित्प्रभिद्यतेवाक्सा विषयस्य भिदावशात् ॥ ७९ ॥
यथा ह्येककृते ग्रन्थेया वाक्न्यायमये भवेत् ।
न सा व्याकरणग्रन्थे तथैवात्रापि मन्यताम् ॥ ८० ॥
निश्वासवत्परेशाच्च श्रुतस्तेषां समुद्भवः ।
स्वात्मानं विधिरूपं स स्वयं वेदानजिग्रहत् ॥ ८१ ॥
ततस्ते ऋषिभिर्दृष्टा मन्त्राः स्वस्वतपोबलात् ।
तत्तद्दर्शनतस्तत्तन्मन्त्रर्षित्वमथाप्नुवन् ॥ ८२ ॥
वयं हि भगवद्वाचि दृढं विश्वसिमः श्रुतौ ।
श्रद्धा चलति नास्माकमप्यसत्कल्पनाशतैः[1] ॥ ८३ ॥
यस्त्वाधुनिकवृत्तान्तकथनाद्दोष उच्यते ।
त्रैकालिकज्ञेशवाचि को दोषः स भवेच्छ्रुतौ ॥ ८४ ॥
विचारेण यतः सिद्धमनादित्वं च संसृतेः ।
भूतार्थकप्रयोगाश्च नैव दुष्यन्ति सर्वथा ॥ ८५ ॥
ननु त्यक्त्वा परात्मानं वह्नीन्द्रादिदिवौकसाम् ।
सपर्यारूपिणो यज्ञा उपदिष्टाः कथं श्रुतौ ॥ ८६ ॥
उच्यते—
यावन्ति खलु कर्माणि द्विजानां विहितानि तु ।
वेदे तैरखिलैरीशो भगवानेव पूज्यते ॥ ८७ ॥

---

१. '० नाशनैः'—इ.

अभ्यर्च्य परमात्मानं ब्राह्मणः स्वेन कर्मणा ।
इत्येवं बहुधा दृष्टं गीताशास्त्रादिषूदितम् ॥ ८८ ॥
किं त्विन्द्रमुखदेवानां तुष्टः सत्कर्मभिर्विभुः ।
द्वारत्वमात्मनस्तेभ्यः पूज्यत्वमपि दत्तवान् ॥ ८९ ॥
अग्नौ प्रत्ताहुतीः सर्वा इन्द्राद्या एव भुञ्जते ।
तद्द्वारा प्रीयते किं तु यज्ञात्मा विष्णुरेव हि ॥ ९० ॥
यदा तत्तत्कर्मफलं कर्मिभ्यो दातुमिच्छति ।
तद्द्वारैव ददातीशो भृत्यद्वारेव भूपतिः ॥ ९१ ॥
यस्य यस्य यथा कर्म न्याय्यं तस्य तथा फलम् ।
इति सत्कर्मकारिभ्यो देवेभ्यः पूज्यतां ददौ ॥ ९२ ॥
यतश्च पूज्यतां न्यायाद्देवेभ्यो दत्तवान्विभुः ।
ततः सर्वैश्च पूज्यास्ते प्रीत्यर्थं परमात्मनः ॥ ९३ ॥
ईशाज्ञापालनं धर्मस्तदेवेशस्य पूजनम् ।
विपरीतस्त्वधर्मः स्यादपराधः स एव हि ॥ ९४ ॥
जगच्चक्रप्रवृत्त्यर्थमाज्ञप्ता ब्राह्मणा यतः ।
ततोऽपीशाज्ञया कार्या अवश्यं ब्राह्मणैः क्रियाः ॥९५॥
यज्ञायत्तं जगच्चक्रमत ईशोऽसृजद् द्विजान् ।
अतस्तत्प्रीतये कार्यं कर्मावश्यं द्विजातिभिः ॥ ९६ ॥
किं च स्वकर्मभिः सत्त्वशुद्धिः संजायते यतः ।
ततश्च ज्ञानयोग्यत्वं कर्मावश्यकताप्यतः ॥ ९७ ॥

---

१. आ इ पुस्तकयोः ' यज्ञेशो भगवान् हरिः ' इति पाठः प्राग्गसीत्स पश्चात्संशोध्य अ पुस्तकवाद्विहितो दृश्यते.

भवतामपि नैवासौ नियमोऽस्ति विनिश्चितः ।
कदाचिन्नैव कर्तव्यमीश्वरान्यस्य पूजनम् ॥ ९८ ॥
क्रियते हि नृपादीनां धनाद्यर्थमुपासना ।
सत्त्वशुद्ध्यादिसिद्ध्यर्थं पूज्यन्ते देवतास्तथा ॥ ९९ ॥
गङ्गास्नानादिका धर्मास्तीर्थयात्रादिकाश्च ये ।
नृणामावृतबोधानां सत्त्वशुद्ध्यर्थमेव ते ॥१००॥
यतो ह्यशुद्धसत्त्वानां शुद्धोऽप्यर्थो न रोचते ।
सत्त्वशुद्धिस्ततः पुंसामस्ति मुक्त्युपयोगिनी ॥१०१॥
यथार्थमेव तत्सर्वं यतः शास्त्रेण बोधितम् ।
धर्माधर्मगतिः सर्वा शास्त्रादेव हि बुध्यते ॥१०२॥
या च वेदे कर्मकाण्डे वह्निवाय्वादिसंस्तुतिः ।
ज्ञेया सा नेश्वराज्ञानाद्भागः कर्मपरो हि सः ॥१०३॥
तथा ह्युपनिषद्भागे परमेश्वरवर्णने ।
वह्न्यादेः कर्मकारित्वमीशभीत्या निरूप्यते ॥१०४॥
न तस्मादीश्वराज्ञानं श्रुतावारोप्यतां क्वचित् ।
वह्न्यादीनां सेवकत्वमीश्वरस्य यतो जगौ ॥१०५॥
किं च केवलकर्मिभ्य ईश्वरज्ञानिनः श्रुतौ ।
उत्कृष्टत्वेन वर्ण्यन्ते साक्षादीश्वरपूजकाः ॥१०६॥
किं चानित्यफलत्वं च वदन्ती सर्वकर्मणाम् ।
ईशज्ञानादेव मुक्तिरिति प्राह श्रुतिः स्वयम् ॥१०७॥

ननु नाकसदामिन्द्रप्रभृतीनां कृतांहसाम् ।
पूजा श्रुतिषु संदिष्टा कथं नामोपपद्यते ॥१०८॥
उच्यते—

करणाद् भूरिपुण्यानां महत्त्वं ते प्रपेदिरे ।
दातारश्चेष्टकामानां पूजनात्पुण्यकारिणः ॥१०९॥
ततो जगत्प्रवृत्त्यादिसत्त्वशुद्ध्यादिसिद्धये ।
यज्ञादिकर्मभिः पूजा त्रिदशानां विधीयते ॥११०॥
अथ यत्र तु देवानां पातकाचरणं श्रुतम् ।
शुद्धिश्च श्रूयते तत्र तदंहोदण्डदर्शनात् ॥१११॥
को नाम विद्यते लोके देही पापविवर्जितः ।
किं तु शुध्यति दण्डेन न्यायोऽसौ परमात्मनः ॥११२॥
तथा ह्यहल्यागामित्वं श्रुतं यत्र बिडौजसः ।
तत्रैव शापात्तद्भर्तुः श्रुतो दण्डस्तदंहसः ॥११३॥
ततः शुद्धात्मनस्तस्य पुण्यासादिततेजसः ।
शतक्रतोर्न दोषाय सपर्येशानुशासनात् ॥११४॥
धर्मैराप्ताधिकारास्ते श्रेष्ठा दिविषदो यतः ।
ईशप्रियाश्च ते तस्माद्युक्ता तेषामपि स्तुतिः ॥११५॥
तस्मात्कर्मप्रकरणे स्तुतेऽपि मरुदादिके ।
नाज्ञानं कल्पनीयं हि परमेशस्य तावता ॥११६॥
ईशप्रतीकरूपेण या तु सूर्याद्युपासना ।
मूर्त्यादेरपि संदिष्टा सेशभावनयैव हि ॥११७॥

व्यापको हि स्मृतो देवो निर्लेपश्च वियद्यथा ।
तद्बुद्ध्या पूज्यते यत्र तत्र स्वीकुरुतेऽर्चनम् ॥११८॥
किं त्वाज्ञा तस्य यत्रास्ति तत्रैवासौ समर्च्यते ।
यतः शास्त्रं प्रमाणं नः कार्याकार्यव्यवस्थितौ ॥११९॥
अथ विष्णुस्तु वेदेषु तुल्यभाषायुतेष्वपि ।
ईशत्वेनैव कथितो नात्र कार्या विचारणा ॥१२०॥
तथा हि विष्णुरूपत्वं यज्ञानां कथ्यते श्रुतौ ।
ततश्च सर्वयज्ञानां तत्परत्वं प्रतीयते ॥१२१॥
किं च प्राप्यं मुमुक्षूणां वैष्णवं पदमुच्यते ।
वेदेषु तुल्यभाषेषु संशयो नेह कश्चन ॥१२२॥
तमेव परमात्मानं नानारूपैस्तथा गुणैः ।
तत्तद्रुच्यनुसारेण जगुः पौराणिकादयः ॥१२३॥
रजःसत्त्वतमोरूपैः सृष्टिस्थित्यन्तहेतुभिः ।
गुणैर्जगुः परात्मानं ब्रह्मविष्णुशिवात्मकम् ॥१२४॥
वस्तुतस्तु न चोपाधेः संबन्धः परमेश्वरे ।
इत्यादि यत्तु सकलं मया प्राक् तन्निरूपितम् ॥१२५॥
यथा हि स्फटिको भाति नानारूप उपाधिभिः ।
स्वयं विकाररहितस्तथेश इति मन्यताम् ॥१२६॥
प्रकृतेस्त्रिगुणैर्भेदमभिन्नस्य प्रकल्प्य हि ।
अधिकारानुरोधेन वर्णयामासुरीश्वरम् ॥१२७॥

न तावता परेशस्य न्यूनत्वं मन्यतां क्वचित्।
सृष्टिस्थित्यन्तकर्तृत्वं महिम्ने ह्यवकल्प्यते ॥१२८॥
यद्यपीदं तु वेदेषु नातिस्पष्टतयोच्यते ।
तथापि मुनिभिर्देवचोदितैर्विशदीकृतम् ॥१२९॥
वेदेभ्यो हि स्फुटा भाषा भारतादिषु दृश्यते ।
किञ्चिद् भिन्ना पुराणेभ्यः स्मृत्यादिष्वपि तादृशी ॥१३०॥
तेभ्योऽतिविशदा वाणी पुराणेष्वनुलक्ष्यते ।
उत्तरोत्तरमन्दानां हितार्थं ह्युत्तरोत्तरम् ॥१३१॥
अपि चैतेषु सर्वेषु मिथो नाम्नां प्रकीर्तनात्।
अप्रामाण्यं न कस्यापि शङ्कितुं शक्यमञ्जसा ॥१३२॥
किं तु धूर्तैः पुराणादौ स्वकाव्यानि क्वचित्क्वचित्।
निवेश्यन्तेऽभिमानेन मतादेरिति शुश्रुम ॥१३३॥
न येषु लक्ष्यते ह्यार्षी प्रगल्भा वाक्सुबुद्धिभिः।
बह्व्यस्तेष्वेव दृश्यन्ते वाचोऽहङ्कारयोनयः ॥१३४॥
तथापि चोरैराक्रान्तो न साधुरपि दूष्यते ।
इत्यादिकं तु सकलं प्रागेवाहमिहोक्तवान् ॥१३५॥
अथ ये कृष्णलीलासु दोषमाहुः स्वया धिया ।
न तत्समुचितं तेषामतिस्वल्पधियां किल ॥१३६॥

१. 'ह्यवकल्पते' इति पाठस्त्रिष्वपि **अ आ इ** पुस्तकेषु.

२. **अ** पुस्तके अत आरभ्य ३१-३२ अङ्कात्मकं पत्रद्वयं नष्टम्.

केश्वरोऽनन्तदुर्ज्ञेयलीलश्चानेकहेतुवित् ।
क्व जीवाः क्षुद्रधिषणा अहो साहसमस्त्यदः ॥१३७॥
सर्वाः स्त्रियश्च पुरुषा यदीया एव केवलम् ।
तस्मिंस्तु व्यभिचारादीन् शङ्कन्ते यत्तदद्भुतम् ॥१३८॥
गोपीभिः प्रार्थितोऽरंस्त तासु किं वान्यकारणात् ।
इत्यादि धातुः को वेद लीलानां कारणं तु यत् ॥१३९॥
उत्तेजिकास्ति तल्लीला पापस्येत्यपि वाग्वृथा ।
न काप्युत्तेजनं दृष्टं पापानामीशलीलया ॥१४०॥
प्रत्युतेश्वरलीलासु ये रताश्चित्तपूर्वकम् ।
तेषां विरक्तिः संसारात्पापादपि च दृश्यते ॥१४१॥
इमं पश्यत लीलानां प्रभावं परमात्मनः ।
यासु प्रेमोद्भवे पुंसो जायते शुद्धमानसम् ॥१४२॥
शृङ्गारादिरसैः पूर्णा अपि लीलाः परात्मनः ।
जनयन्ति मनःशान्तिं [1]किं तच्चित्रं जगद्गुरौ ॥१४३॥
इदमेवैश्वरं कृत्यं यत्सन्मार्गे प्रवर्तनम् ।
न तस्य धर्मैराप्तव्यं हेयं वाप्यस्त्यधर्मतः ॥१४४॥
त्यक्तसर्वार्थरागाभ्यो गोपीभ्यो दिशता शिवम् ।
ईशैकतानतायास्तु महिमा संप्रदर्शितः ॥१४५॥

---

१. 'किं तच्चित्रमधोक्षजे'—आ. इ पुस्तकेऽपि प्रागयमेव पाठ आसीत्सः पश्चात्संशोध्य 'किं तच्चित्रं जगद्गुरौ' इति विहितः.

अर्जुनायोपसन्नाय विश्वरूपमदर्शयत् ।
कृष्णायाः पालयंल्लज्जां सभां वस्त्रैरपूरयत् ॥१४६॥
प्रेम्णाथ कृष्णयाहूतः शाकपत्रेण तर्पितः ।
दुर्वाससः सशिष्यस्यानाशयद्गर्वपर्वतम् ॥१४७॥
प्रगायतां स्ववीर्याणि स्वान्त आविर्भवन् हरिः ।
अपाकरोति मालिन्यं मनःशान्तिं च यच्छति ॥१४८॥
गायतां श्रद्दधानानां पावनीर्भगवत्कथाः ।
शुद्धिमेति यथा चित्तं तत्सतामानुभाविकम् ॥१४९॥
यदुनन्दन—गोविन्द—राम—कृष्णेति वल्गताम् ।
यदुद्भवति नः प्रेम किं ब्रूमो भवतां पुरः ॥१५०॥
धृत्वावतारं स्वीयाभिर्लीलाभिर्भगवाञ्जनान् ।
कुरुते साधुहृदयान् किमन्यद्धि करोतु सः ॥१५१॥
नास्माकमधिकारोऽस्ति चरितेषु परात्मनः ।
दोषानल्पधिया धातुं को वेदास्याशयं परम् ॥१५२॥
अल्पदृष्टिकृतैर्दोषाभासैश्चेद् दूष्यते विभुः ।
किं भवत्संमतेशोऽपि दोषाशङ्का न जायते ॥१५३॥
तथा हि दुःखफलके प्रवृत्तान्पातके नरान् ।
हितेच्छुः शक्तियुक्तोऽपि निवर्तयति किं न हि ॥१५४॥
न धावत्यर्भके तातः शङ्कमानोऽपि तत्क्षतिम् ।
अपेक्षते तत्पतनं किं त्वेनं निरुणद्ध्यसौ ॥१५५॥

तस्माद् व्यसनितैवेशे ह्यशक्तिर्वा प्रकल्पिता ।
भवदीये मत इति सुव्यक्तं प्रतिभाति नः ॥१५६॥
प्रवृत्तावेव जीवानां निरुद्धायां तु पाप्मनि ।
कथं कुर्युस्ततः पापं दुःखं वा प्राप्नुयुः कथम् ॥१५७॥
न चैतदकरोदीशः सर्वशक्तियुतोऽपि सन् ।
तस्मादीशे भवेत्सिद्धा गौरवाप्रतिभाप्युत ॥१५८॥
कष्टं यदसृजज्जीवान् धर्मैकप्राप्यमङ्गलान् ।
पापात्त बहुदुःखार्हाननिवर्त्यप्रवृत्तिकान् ॥१५९॥
कथं नु दुःखभाजः स्युः सृज्येरन्नैव ते यदि ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥१६०॥
अनाहतानन्तशक्तावपारकरुणानिधौ ।
प्राणिनामिच्छति श्रेयः साक्षाज्जाग्रत्यपीश्वरे ॥१६१॥
जनान्वञ्चयतीशस्य कथं विगतसाध्वसः ।
पापः पिशाचकः कश्चित् पातकेषु प्रवर्तयन् ॥१६२॥
ईशाशयं न जानीमो वयमित्युच्यते यदि ।
तदेवोत्तरमस्माकमपि तर्ह्यत्र बुध्यताम् ॥१६३॥
तस्मान्न शङ्क्यतां जातु किञ्चिदीश्वरकर्मसु ।
बुद्धिर्हि तनुरस्माकं नार्हतीशपरीक्षणम् ॥१६४॥
किं च या अकरोल्लीला भगवान्[1] गोकुले हरिः ।
ता हि पौगण्डवयसि न तूपनयनात्परम् ॥१६५॥

---

१. अत आरभ्य ग्रन्थभागः अ पुस्तकेऽपि पठ्यते.

अनन्तरं तूपनीतेर्विद्याग्रहणपूर्वकम् ।
धर्म एव हि कृष्णेन कृतः शास्त्रेषु दृश्यते ॥१६६॥
तथैवाहापि गीतासु भगवानर्जुनं प्रति ।
आप्तकामोऽपि धर्मस्य स्थित्यै कुर्वे क्रिया इति ॥१६७॥
विष्णोरंशावतारत्वं यत्कृष्णस्य त्वभाणिषुः ।
नासौ विष्णुपुराणादेरभिप्रायोऽस्ति सर्वथा ॥१६८॥
तत्र हि श्रीहरिः साक्षाद्ब्रह्मत्वेन निरूपितः ।
तस्मात्तदनुरोधेनाभिप्रायस्तस्य वर्ण्यताम् ॥१६९॥
उपक्रमोपसंहाराद्यविरोधेन सिध्यति ।
यः स शास्त्राशयः प्रोक्तो मीमांसान्यायचिन्तकैः ॥१७०॥
तस्माद्वैष्णवकेशाभ्यां जनुषी रामकृष्णयोः ।
प्रोक्ते रेतोविकारत्वाभावबोधाय वै तयोः ॥१७१॥
अंशेनावतरद्विष्णुरिति यच्चापि दृश्यते ।
तदप्यैच्छिकमूर्त्यासौ बभूवेत्यर्थकं मतम् ॥१७२॥
तथा हि व्यापको देवो देवक्या जठरे कथम् ।
स्थास्यतीत्याशयच्छित्त्यायंशेनेति समीरितम् ॥१७३॥
तथा च व्यापकोऽप्येष ऐच्छिकेन स्ववर्ष्मणा ।
परिच्छिन्नेन भगवान् संबभूवेति कथ्यते ॥१७४॥
अथाकाशपृथिव्यादेर्मानं यत्पञ्चलक्षणे ।
प्रोच्यते तदुपासार्थं विराड्रूपे परात्मनः ॥१७५॥

केवलं तस्य तात्पर्यमीशमाहात्म्यवर्णने ।
न तु तत्रोच्यते मानं पृथिव्यादेस्तु तात्त्विकम् ॥१७६॥
नन्वतात्त्विकमर्थं चेद्वक्ति शास्त्रं तदैश्वरम् ।
कथं स्यादिति चेदत्र प्रोच्यते तन्निशामय ॥१७७॥
तात्पर्येण पृथिव्यादेर्यदि मानं विवक्षितम् ।
पुराणानां भवेत्तर्हि स्याद्दोषो भवदीरितः ॥१७८॥
तत्तु नास्त्येव किं त्वेषां माहात्म्यं केवलं विभोः ।
वक्तव्यमस्ति बहुधोपासनार्थं विराट्तनोः ॥१७९॥
यथैष लक्षमुद्रावान्धनिकोऽस्तीति भाषिणम् ।
न मिथ्यावादिनं प्राहुर्धनिनो धनवर्णने ॥१८०॥
न हि तथ्यैव विज्ञाता जनैस्तल्लक्षशालिता ।
अतात्पर्यात्तु संख्यायास्तद्वचो नास्ति दोषभाक् ॥१८१॥
तथैव देवमाहात्म्यवर्णनैकपरेऽपि च ।
दोषः पुराणसंदोहे न विचारेण लक्ष्यते ॥१८२॥
अत एव पुराणानां वैमत्येऽपि परस्परम् ।
बहुधेश्वरमाहात्म्यं दोषो वर्णयतां न हि ॥१८३॥
न तावता तु सिद्धान्ताज्ञानं तेषां प्रकल्प्यताम् ।
विषयाः सर्वशास्त्राणां दृश्यन्ते पञ्चलक्षणे ॥१८४॥
भवतां च मतेऽप्यस्ति शास्त्रविद्याविपर्ययः ।
शास्त्रे तु भानोर्विद्यायां पृथिव्या गतिरिष्यते ॥१८५॥

ततश्च भवतां पूर्वेऽप्यज्ञाः शास्त्रकृतोऽभवन् ।
पश्चात्सुबुद्धयो जाता इति शङ्का भवेन्न किम् ॥ १८६ ॥
अथ शास्त्रेषु विहिता यास्तु विप्रादिजातयः ।
उच्यते तासु दोषश्चेदिदमत्राभिदध्महे ॥ १८७ ॥
पूर्वजन्मकृतैः पुण्यपापैरुत्तरजन्मनि ।
नानाफलानि भुज्यन्ते प्राणिभिः सकलैरपि ॥ १८८ ॥
केचित्तु नेत्रविकला बधिराः पङ्गवोऽपरे ।
केचित्सुरूप बलिनो धनिनो बुद्धिशालिनः ॥ १८९ ॥
केचिद्विवेकिनः शान्ताः केचिन्मूढा अमर्षिणः ।
एवं हि दृश्यते नानाविधः कर्मफलोदयः ॥१९०॥
तथैव कर्मणा प्राचा ब्राह्मणाद्याश्च जातयः ।
लभ्यन्ते प्राणिभिस्त्वेतच्छास्त्रदृष्टं न चान्यथा ॥१९१॥
शास्त्रं हि दृष्टिरस्माकं तेनादृष्टं समीक्ष्यते ।
तच्च युक्त्याभिसंपन्नं को न मन्येत बुद्धिमान् ॥१९२॥
न हि तुल्यस्वभावत्वान्न्यूनत्वाद्वा गुणैरपि ।
विप्राः स्युरितरैस्तुल्या न्यूना वापि कथञ्चन ॥१९३॥
अपि भूरिगुणैर्युक्तो भृत्यस्तुल्योऽपि वा गुणैः ।
न जातु धरणीपालपदवीं भोक्तुमर्हति ॥१९४॥
एषैव पदवी ब्राह्मी कृतपुण्यैरुपार्जिता ।
यदादेशात्परेशस्य यज्ञादीन्कर्तुमर्हति ॥१९५॥

अथ याः स्मृतयः काश्चिन्निन्द्यास्त्यक्ताश्च वैदिकैः ।
पापिनां दण्डभोगार्थमीशस्ता उदपादयत् ॥१९६॥
अवश्यं पापिनां दण्डो भवतामपि संमतः ।
तथैव तेषां दण्डार्थं कदध्वानः कृता इमे ॥१९७॥
तथा हि ये नराः पापा रोचयन्ते त एव ताः ।
बह्वनर्थावहाल्पेष्टदायिकर्मसु लोलुपाः ॥१९८॥
धूर्ता दोषयुताचाररता मलिनबुद्धयः ।
पुनः पुनर्भगवता पात्यन्ते नरकेऽशुचौ ॥१९९॥
तथा हि शास्त्रद्वारैतद्व्यक्तं बोधयतीश्वरः ।
दुष्टानां दण्डदानार्थं स्मृतयस्ताः कृता इति ॥२००॥
अत एव हि ये पुण्यकर्माणः श्रद्धया युताः ।
न ताः स्मृतीस्ते मन्यन्ते संमतेशानुशासनाः ॥२०१॥
तस्माच्छुद्धतमं शास्त्रं वैदिकं मङ्गलावहम् ।
क्षुद्रबुद्धिसमुद्भूतैर्न त्याज्यं दोषसंशयैः ॥२०२॥

इति षष्ठस्याध्यायस्य पूर्वार्धम्[1] ।

---

१ अत उत्तरं 'समाप्तम्' इत्यधिकं त्रिष्वपि अ आ इ पुस्तकेषु.

## (उत्तरार्धम्)

वेदान्तादिषु ये प्रोक्ता दोषाभासाः स्वया धिया।
तेषूक्तान्येव भूयांसि समाधानानि सूरिभिः ॥ १ ॥
नृणामत्यल्पबुद्धित्वात्सूक्ष्मगम्भीरवस्तुनि ।
भवन्ति संशयाः पुंसां तद्धि तस्यास्ति भूषणम् ॥ २ ॥
किं तु नानाविधाक्षेपसमाधानादिलेखने ।
इहापद्येत सर्वेषां ग्रन्थानामपि लेखनम् ॥ ३ ॥
उपादानत्वमीशस्य तदभेदं जगत्यपि ।
ब्रुवन्वेदान्तसिद्धान्तो नेशे वदति दूषणम् ॥ ४ ॥
पत्रे कज्जलरेखायाः पुमाकारेण लेखने ।
पत्रं च तदवच्छिन्नं पुमाकारेण भासते ॥ ५ ॥
प्रकृतेर्नामरूपाभ्यां स्वसत्तानुगमेन च ।
जीवकर्मवशादीशो जगद्वदवभासते ॥ ६ ॥
रेखैव पुंव्यवहृतौ केवलं कारणं मता ।
अधिष्ठानतया पत्रं तत्रोपकुरुते यथा ॥ ७ ॥
जगद्व्यवहृतौ हेतू प्राकृते नामरूपके ।
अधिष्ठानतया ब्रह्म तस्योपादानमुच्यते ॥ ८ ॥
या तावत्पुरुषे सत्ता पत्रस्यैव हि सा स्मृता।
रेखाकृतं तु तद्रूपं यत्र दोषस्य संभवः ॥ ९ ॥
सत्ता चैतन्यमानन्दस्त्रितयं ब्राह्ममुच्यते ।
प्राकृते नामरूपे तु सर्वे दोषास्तदाश्रयाः ॥ १० ॥

न सत्तायां न चानन्दे ज्ञाने वा दोषसंभवः ।
दोषा जगति यावन्तो नामरूपगता हि ते ॥ ११ ॥
रेखालेखनदोषेण पुमानङ्गेन केनचित् ।
दुष्टोऽपि च न तत्पत्रं दुष्टतां लभते यथा ॥ १२ ॥
तथा सच्चिन्मयवपुर्विश्वाधिष्ठान एव सन् ।
नामरूपगतैर्दोषैर्नेश्वरोऽण्वपि लिप्यते ॥ १३ ॥
न तद्विक्रियते पत्रं भासमानं च पुंस्तया ।
रेखया किं तु पुरुषव्यवहारास्पदीकृतम् ॥ १४ ॥
तथा जीवादृष्टवशात्प्राकृतैर्नामरूपकैः ।
जगद्रूपद्भासमानेऽपि नेशे सूक्ष्मापि विक्रिया ॥ १५ ॥
पादोऽस्य सर्वभूतानि[1] पादत्रयमथामृतम् ।
अस्यैकांशो जीववर्ग इति शास्त्रेषु गीयते ॥ १६ ॥
निरंशे वस्तुतो ब्रह्मण्यौपाधिक्यंशकल्पना ।
निरंशेऽपि यथा व्योम्नि घटाकाशादिकल्पना ॥ १७ ॥
न तावत्पुरुषः पत्राद्भिद्यतेऽथापि पत्रकम् ।
न दुष्टं नापि विकृतं स्वरूपान्नाणु हीयते ॥ १८ ॥
तथेशात्स्वाश्रयाद्विश्वं यद्यपीदं न भिद्यते ।
न दुष्टो नापि विकृतः स्वरूपादच्युतो हरिः ॥ १९ ॥
यथा रेखागता दोषा दूषयन्तोऽपि पूरुषम् ।
नोत्पादयन्ति विकृतिं पत्रे रूपविवर्जिते ॥ २० ॥

---

१ ' सर्वभूपानि '—आ इ.

नामरूपगता दोषा दूषयन्तोऽपि वै जगत् ।
नोत्पादयन्ति विकृतिं चिदानन्दमये हरौ ॥ २१ ॥
धर्माधर्मविपाको यः सोऽदृष्टमिति भाष्यते ।
तौ च देहाभिमानोत्थौ स चाज्ञानप्रकल्पितः ॥ २२ ॥
यथा प्रकाशतमसोर्विरोधः सुमहान् स्थितः ।
तथा चिदात्मदेहाद्योः स्फुटात्यन्तविरोधिता ॥ २३ ॥
तमस्तुल्यप्रभावं हि देहादि सकलं जडम् ।
तेजस्तुल्यस्वभावो वा आत्मासौ चिन्मयो यतः ॥ २४ ॥
तथापि देह आत्मत्वमध्यस्यात्मनि देहताम् ।
अविवेकाच्चिदचितोर्ममाहमिति मन्यते ॥ २५ ॥
ततो देहाद्यहङ्कारात्सुखादौ जायते स्पृहा ।
तत इष्टानिष्टयोगवियोगार्थं प्रवर्तते ॥ २६ ॥
साहङ्कारप्रवृत्तेश्च धर्माधर्माभिसंभवः ।
ततश्च सुखदुःखादि तथा तत्साधनं जगत् ॥ २७ ॥
नेश्वरः स्वोपभोगार्थं जगत्सृजति लोकवत् ।
किं तु तत्तत्कर्मवशादिति प्राक्प्रतिपादितम् ॥ २८ ॥
यस्य यस्य यथा कर्म न्याय्यं[1] तस्य तथा फलम् ।
न[2] युष्मन्मतवत्त्वत्र भोगेच्छा कल्प्यते विभौ ॥ २९ ॥

---

१ 'न्यायं'— अ.

२ आ इ पुस्तकयोः 'न तु युष्मन्मत इव' इति पाठः प्रागासीत्; पश्चात्संशोध्य 'न युष्मन्मतवत्त्वत्र' इति विहितो दृश्यते.

मिथ्याज्ञानादभिमतिः साहङ्कारः प्रवर्तते ।
धर्माधर्मौ ततः स्यातां तद्भोगार्थमिदं जगत् ॥ ३० ॥

क चात्मा चित्स्वभावोऽसौ क देहादि जडं तयोः ।
वैलक्षण्यं महदिति विवेकाभ्याससंपदा ॥ ३१ ॥

दुःखाद्या देहगा धर्मा आत्मैभ्यो व्यतिरिच्यते ।
न मे कश्चिन्न मेऽत्रार्थ इति ज्ञात्वा विमुच्यते ॥ ३२ ॥

अभिमानोद्भवं दुःखं सर्वेषामानुभाविकम् ।
तन्निरासात्तन्निरास इत्यपि प्राङ् निरूपितम् ॥ ३३ ॥

धर्माधर्मौ सुखं दुःखं सर्वे देहादिगा गुणाः ।
यस्यैवं वास्तवो बोधो धर्माद्यैर्न स लिप्यते ॥ ३४ ॥

सुखदुःखाभिलाषी यो धर्माधर्मसुनिःस्पृहः ।
स मिथ्याज्ञानवान्धूर्तो बध्यते स्वेन कर्मणा ॥ ३५ ॥

अत एव हि लोकेऽस्मिन् ज्ञानी परमदुर्लभः ।
ईशस्य परया भक्त्या लभ्यते तत्कृपावशात् ॥ ३६ ॥

अत एकान्तभावेन जगतां पतिरच्युतः ।
उपासनीयः पुरुषैः स हि ज्ञानं प्रयच्छति ॥ ३७ ॥

अनाद्यविद्याप्रच्छन्नबोधानां प्राणिनामिह ।
गोविन्दभजनादन्यच्छरणं नास्ति किञ्चन ॥ ३८ ॥

[1]अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥ ३९ ॥

---

१ आ इ पुस्तकयोरस्य श्लोकस्य स्थाने 'अनाद्यविद्यासुप्तोऽयं प्रबोधं याति वै यदा । तदात्मानमजं ज्ञात्वा सर्वबन्धात्प्रमुच्यते ॥' इति श्लोकः प्रागासीद्यः पश्चादुपरितनपाठवच्छ्लोकेन निरस्तो दृश्यते.

न चेशो भ्रामयत्यस्मानुदासीनतया स्थितः ।
स्वाज्ञानेनैव मुह्यामो न यावत्तत्त्वदर्शनम् ॥ ४० ॥
प्रत्युतेशो बोधयति वाक्यैर्वेदमयैर्निजैः ।
देहाभिमानं मा कार्षीस्तस्मात्त्वं ह्यतिरिच्यसे ॥ ४१ ॥
नन्वज्ञानमथो बन्धो भवतः कस्य तद्वद ।
ब्रह्मणश्चेत्परं ब्रह्म कथं बन्धेन युज्यते ॥ ४२ ॥
उच्यते—
नाज्ञानं नापि वा बन्धो ब्रह्मदृष्ट्यास्ति कर्हिचित् ।
नित्यशुद्धं नित्यबुद्धं नित्यमुक्तं च तत्स्थितम् ॥ ४३ ॥
जीवदृष्ट्या त्वसौ बन्धश्चिज्जडाध्याससंभवः ।
अवास्तवस्त्वसौ यस्मान्मिथ्याज्ञानप्रकल्पितः ॥ ४४ ॥
विरुद्धश्चिन्मयो ह्यात्मा देहादिजडसंघतः ।
तयोः परस्पराध्यासे मिथ्यात्वमुचितं भ्रमे ॥ ४५ ॥
यथा प्रकाशतमसोर्विरोधः सुमहान् स्थितः ।
तथा चिदात्मदेहाद्योः स्फुटात्यन्तविरोधिता ॥ ४६ ॥
यथा मिथोगुणाध्यासः प्रकाशतमसोर्मृषा ।
तथा मिथोगुणाध्यासश्चिदात्मजडयोर्मृषा ॥ ४७ ॥
प्रकाशे श्यामताबुद्धिस्तमस्युज्ज्वलतादिधीः ।
यथा मृषात्मनि तथा कार्श्यं दुःखादिधीभ्रमः ॥ ४८ ॥
भ्रमजन्यस्य बन्धस्य मिथ्यात्वमपि निश्चितम् ।
भ्रान्तदृष्ट्या त्वसौ सत्योऽभ्रान्तदृष्ट्या मृषैव सः ॥ ४९ ॥

स्वप्नीयदुःखं चौर्यं च तद्दण्डादिकमेव च ।
सत्यं स्वप्नगदृष्ट्या तु जाग्रद्दृष्ट्या मृषैव तत् ॥ ५० ॥
जीवदृष्ट्या तथा बन्धो धर्माधर्मौ सुखासुखे ।
ब्रह्मदृष्ट्या तु तत्सर्वं जीवेन सहितं मृषा ॥ ५१ ॥
स्वप्ने दुःखं यथा प्राप्तं किल्बिषं वा कृतं बहु ।
सर्वस्य तस्य मिथ्यात्वात् पुमांस्तेन न लिप्यते ॥ ५२ ॥
तथा जीवकृतैर्दोषैः सुखैर्दुःखैश्च तद्गतैः ।
तेषां स्वदृष्ट्या मिथ्यात्वान्नेश्वरोऽण्वपि लिप्यते ॥ ५३ ॥
जीवस्तु सुखदुःखादि धर्माधर्मौ तथार्हति ।
मृषापि सद्यथा स्वप्ने सुखदुःखादि भुज्यते ॥ ५४ ॥
स्वप्नेऽपराधं कुर्वाणः परेषां ताड्यते च तैः ।
दुःखं च तस्मादाप्नोति मिथ्यात्वेऽप्यखिलस्य च ॥ ५५ ॥
तथात्मभावं देहादावध्यस्यात्मनि देहताम् ।
अविवेकाच्चिदचितोर्ममाहमिति मन्यते ॥ ५६ ॥
अनाद्यविद्यया त्वेवं जीवो मोहमुपागतः ।
धर्माधर्मौ सुखं दुःखमा प्रबोधाद्व्रजत्यसौ ॥ ५७ ॥
[1] अनादिमायया सुप्तो यदा जीवः प्रबुध्यते ।
अजमनिद्रमस्वप्नमात्मानं बुध्यते तदा ॥ ५८ ॥

---

१ अत्रापि आ इ पुस्तकयोः "अनाद्यविद्यासुप्तोऽयं प्रबोधं याति वै यदा । तदात्मानमजं ज्ञात्वा सर्वबन्धात्प्रमुच्यते ॥" इति श्लोकः प्राग्लिखितः पश्चादुपरितनश्लोकेन निरस्तश्च दृश्यते.

ननु जीवस्य किं रूपमीशाद्भिन्नोऽस्त्ययं न वा ।
भेदे सिद्धान्तहानिः स्यादभेदे त्वीशदूषणम् ॥ ५९ ॥
अत्रोच्यते—
स्वप्ने य एष पुरुषो भ्रमन्[1]भवति दुःखभाक् ।
सुखं शयानाच्छय्यायां न हि तावद्विभिद्यते ॥ ६० ॥
अभेदेऽपि स्वप्नगतैर्दोषैर्जाग्रन्न लिप्यते ।
विलासायैव ते तस्य स्वप्नगस्तु प्रबाध्यते ॥ ६१ ॥
स्वप्ने स्तेयादि कुर्वाणस्ताड्यते च तथा परैः ।
न तेन जाग्रत्पापीयान् स्वप्नगस्तु प्रबाध्यते ॥ ६२ ॥
यत्पापाचरणं स्वप्ने दुःखभोगश्च पुष्कलः ।
जाग्रद्दृष्ट्या विलासोऽसौ स्वप्नगस्तु प्रबाध्यते ॥ ६३ ॥
जाग्रत्स्वप्नगयोर्भेदो वस्तुतो न तथापि तु ।
विलासमात्रं तद्दृष्ट्या[2] तद्दोषैर्न तु लिप्यते ॥ ६४ ॥
ईशदृष्ट्या प्रपञ्चोऽयं विलासायैव केवलम् ।
न दोषैर्लिप्यतेऽत्रत्यैः सोऽस्य साक्ष्येव संस्मृतः ॥ ६५ ॥
स्वैकांशकल्पितं विश्वं पश्यन्साक्षितया स्थितः ।
न स्वस्वरूपाच्च्यवते ह्यनन्तमहिमा विभुः ॥ ६६ ॥
पादोऽस्य सर्वभूतानि पादत्रयमथामृतम् ।
अस्यैकांशो जीववर्ग इति शास्त्रेषु गीयते ॥ ६७ ॥

---

१ 'भ्रवन्' इति भ्रान्तः पाठः आ इ पुस्तकयोः.
२ 'तद्दृष्ट्या'–आ.

निरंशे वस्तुतो ब्रह्मण्यौपाधिक्यंशकल्पना ।
निरंशेऽपि यथा व्योम्नि घटाकाशादिकल्पना ॥ ६८ ॥
कवीनामपि वै प्राचामतर्क्यो महिमा हरेः ।
क उत्कर्षो भवेत्तस्य यद्यस्मद्बुद्धिगोचरः ॥ ६९ ॥
ईशदृष्ट्या विलासोऽसौ यज्जीवैरिह भुज्यते ।
जाग्रद्दृष्ट्या विलासो हि भुज्यते स्वप्नगेन यत् ॥ ७० ॥
अखिलैर्जीवगैर्धर्मैर्नेश्वरोऽण्वपि लिप्यते ।
तस्य दृष्ट्या मृषा ते हि नित्यबुद्धस्वभाविनः ॥ ७१ ॥
नित्यबुद्धस्वरूपस्य दृष्ट्या भगवतस्त्विमे ।
मृषैव जीवगा दोषाः स वै साक्षितया स्थितः ॥ ७२ ॥
जीवदृष्ट्या त्विमे सत्या यथा स्वप्नगतः पुमान् ।
क्लिश्यति स्वप्नगैर्दुःखैर्यतते च निवारणे ॥ ७३ ॥
यतितव्यं ततोऽवश्यमात्मबन्धविमुक्तये ।
मिथ्याभिमानजं दुःखं विवेकात्सुखमश्नुते ॥ ७४ ॥
एतेन प्राणिनां बन्धः कल्पितो यद्यवास्तवः ।
किमर्था तर्हि तन्मुक्तिरित्युक्तिरपि खण्डिता ॥ ७५ ॥
स्वप्नानुभूतदुःखानामसतामपि वस्तुतः ।
बोधान्निवृत्तिः संजाता किं सुखाय न कल्प्यते[1] ॥ ७६ ॥
पाप्मना लभते दुःखं पुण्येन लभते सुखम् ।
विवेकपूर्वकाज्ज्ञानात् सर्वबन्धात्प्रमुच्यते ॥ ७७ ॥

१ 'कल्पते'–अ आ.

कल्पितं खलु जीवत्वं तत्त्वज्ञानेन नश्यति ।
ततश्चोपाधिनाशेन स्वस्वरूपेऽवतिष्ठते ॥ ७८ ॥
एतेनेश्वरसारूप्यं जीवानां मुक्तिरस्ति चेत् ।
भवेद् वृद्धिर्विकारश्चेश्वरस्येत्यपि खण्डितम् ॥ ७९ ॥
अनाद्यविद्यया युक्तो जीवो भ्रमति संसृतौ ।
अविद्योपाधिनाशे तु स्वरूपमवशिष्यते ॥ ८० ॥
यच्चोक्तं ज्ञानिनः पुंसोऽहङ्कृतिर्जायते ध्रुवम् ।
वचस्तदप्यहं मन्ये नभःपङ्कजवाक्यवत् ॥ ८१ ॥
गतदेहाद्यभिमतेः केवलं ब्रह्म पश्यतः ।
ज्ञानिनोऽहङ्कृतिरिति वचः स्यात्कथमर्थवत् ॥ ८२ ॥
गतदेहाद्यभिमतिर्यः स ज्ञानीति कथ्यते ।
अहन्ता यस्य न क्षीणा ज्ञानित्वं तस्य वा कथम् ॥ ८३ ॥
अत एवोच्यते लोके ज्ञानी परमदुर्लभः ।
[1]तद्धीशकरुणाल[2]भ्यमतः सेव्यः सदा हरिः ॥ ८४ ॥
त्यक्तान्यभानः सर्वत्र हरिमेकं यदेक्षते ।
तदा तं ज्ञानिनं प्राहुः का तत्राहङ्कृतेः कथा ॥ ८५ ॥

---

१ अत आरभ्य त्रयाणां श्लोकार्धानां स्थाने 'ये तु ज्ञानवदाभासास्तेषा स्यात्तादृशी स्थितिः ।' इत्येक एव श्लोकार्धः प्रागासीत् आ पुस्तके यः पश्चादिदानीन्तनपाठेन निरस्तो दृश्यते.

२ आ इ पुस्तकयोः '० लभ्यं तदुपास्यः सदा हरिः' इति पाठः प्राग्लिखितः पश्चादुपरितनपाठेन निरस्तश्च दृश्यते.

भवन्मतं च जीवांहोदण्डं खृष्टोऽग्रहीत्स्वयम्।
तस्मिन्विश्वासमात्रेण मुच्यन्ते पातकादिति ॥ ८६ ॥
ततः खृष्टे सुविश्वस्य केचित्पातकलोलुपाः ।
कुर्युः पापमसौ दोषः प्रत्युतास्ति भवन्मते ॥ ८७ ॥
सर्वशुद्धतमं तस्मादिदं वेदान्तदर्शनम् ।
दोषलेशोऽपि नेहास्ति किं त्वग्राह्यमसद्धियाम्॥ ८८ ॥
नित्यशुद्धो नित्यबुद्धो नित्यमुक्तश्च वै विभुः।
अकामोऽव्यसनी चैव वेदान्तेष्वेव कथ्यते ॥ ८९ ॥
किं चात्र विषये किञ्चिदन्यदप्युच्यते वचः ।
यथा वेदान्तनैर्मल्यं दोषश्चास्ति मतान्तरे ॥ ९० ॥
दोषदुःखयुताञ्जीवान् स्वोपभोगार्थमीश्वरः ।
तेषां दुःखान्यगणयन् सृजतीति भवन्मतम्॥ ९१ ॥
स्वैकांशेन तथा भूत्वा क्रीडतीति मतं तु नः।
भवन्मतान्मतेऽस्माकं विषयेऽस्मिन्न गौणता ॥ ९२ ॥
उत्पादको यश्चोराणां स्वयं चोरश्च यो भवेत्।
किं तारतम्यमुभयोर्विचारे सति सिध्यति ॥ ९३ ॥
किं तु युष्मन्मते सत्यं दुःखं दोषाश्च वै यतः।
दुष्टोत्पादकता सत्या विभौ क्लृप्ता भवन्मते ॥ ९४ ॥
अस्माकं तु मते दुःखं दोषाश्च भ्रान्तिजा यतः।
भ्रान्तदृष्ट्यैव ते सत्या ब्रह्मदृष्ट्या मृषैव हि ॥ ९५ ॥

---

१ 'ईशो' इति प्राक्तनः पश्चान्निरस्तश्च पाठः आ पुस्तके.

अभ्रान्तं हि परं ब्रह्म तद्दृष्ट्यैते मृषा ततः।
अस्माकं दुष्टता मिथ्या विशेषोऽस्मन्मते त्वियान् ॥ ९६ ॥
विरुद्धश्चिन्मयो ह्यात्मा देहादिजडसंघतः ।
तयोः परस्पराध्यासे मिथ्यात्वमुचितं भ्रमे ॥ ९७ ॥
भ्रमजन्यस्य बन्धस्य मिथ्यात्वमपि निश्चितम्।
भ्रान्तदृष्ट्या त्वसौ सत्योऽभ्रान्तदृष्ट्या मृषैव सः॥ ९८ ॥
स्वप्नीयदुःखं चौर्यं च तद्दण्डादिकमेव च ।
सत्यं स्वप्नगदृष्ट्यैव जाग्रद्दृष्ट्या मृषैव हि ॥ ९९ ॥
जीवत्वं जीवदोषाश्च ब्रह्मदृष्ट्या मृषैव हि ।
नित्यबुद्धतया तच्च स्वे महिम्न्येव तिष्ठति ॥१००॥
चोरोत्पादकता सत्या विभौ क्लृप्ता भवन्मते ।
अस्माकं चोरता मिथ्या विशेषोऽस्मन्मते त्वियान् ॥१०१॥
दुष्टोत्पादकता सत्या विभौ क्लृप्ता भवन्मते ।
अस्माकं दुष्टता मिथ्या विशेषोऽस्मन्मते त्वियान्॥१०२॥
जीवत्वं जीवदोषाश्च भ्रान्तदृष्ट्यैव केवलम् ।
ब्रह्मदृष्ट्या न सन्त्येव तद्दोषैर्नैव लिप्यते ॥१०३॥
ननु दुष्टान्नरानीशः सृजतीति न नो मतम् ।
नृणामेवेश्वरः कर्ता दोषा जीवकृता मताः ॥१०४॥
अत्रोच्यते—
भूतभव्यभवज्ज्ञाता परमात्मा यतो मतः ।
ज्ञातवानेव जीवानां भविष्यद्दोषशालिताम् ॥१०५॥

मत्सृष्टेषु भविष्यन्ति खल्वेते दोषशालिनः ।
ततोऽतिदुःखिनश्चेति जानात्येव किलेश्वरः ॥१०६॥
इति जानन्नपीशस्तान् सृजत्येवेति वल्गताम् ।
अनपोह्या व्यसनिता दुष्टोत्पादकतापि च ॥१०७॥
सदोषान्यदि नास्राक्षीद्धाविदोषांस्तथापि नॄन् ।
जानन्नपि यतोऽस्राक्षीद् दुष्टानेव ततोऽसृजत्॥१०८॥
अजानन्नस्वतन्त्रश्च पिता पुत्रान्सृजन्नपि ।
कालेन तेषां दुष्टत्वे न स दुष्यति तावता ॥१०९॥
स्वतन्त्रोऽप्येष भगवान् भविष्यद्दोषशालिताम् ।
नृणां ज्ञात्वापि तान्कुर्वन् दुष्टोत्पादक एव सः ॥११०॥
इममर्थं सृजाम्यस्माद्दोषोऽपि भविता महान् ।
इति जानन्नपि स्रष्टा दुष्टस्रष्टा कथं न सः ॥१११॥
ईशः शर्मेच्छया जीवान्सृजतीति तु वादिनः ।
मोघेच्छत्वमथाज्ञत्वं कल्पयन्ति परात्मनि ॥११२॥
किं च शुद्धानेव नरान्यद्युत्पादयतीश्वरः ।
शुद्धानां दुष्टता हन्त कथं कालेन जायते ॥११३॥
नरास्तद्बुद्धयश्चैव शुद्धा एव कृता यदि ।
कथं दुष्यन्ति कालेन धीश्च पापे प्रवर्तते ॥११४॥
यदि शुद्धधियां पापरतिः कालेन जायते ।
स्वर्गता अपि कालेन भजेयुर्दुष्टतां तदा ॥११५॥

दुष्टबुद्धींश्च दुष्टांश्च तस्मात्सृजति नॄन्विभुः ।
अप्रार्थितमपि ह्येतद् भवच्छास्त्रेण सिध्यति ॥११६॥
एवमन्येऽपि बहवो दोषाः सन्ति भवन्मते ।
इह द्वितीयेऽध्याये च केचित्तेषु प्रदर्शिताः ॥११७॥
किं च दुःखाकुलाञ्जीवान्सृजतीति तु दूषणम् ।
स्फुटमेव भवच्छास्त्रे जन्मतोऽन्धादिदर्शनात् ॥११८॥
तस्माद्दोषादियुक्तान्नॄन्सृजतीति भवन्मतात् ।
स्वैकांशेन तथा भूत्वा क्रीडतीत्यत्र का क्षतिः ॥११९॥
उत्पादको यश्चोराणां स्वयं चोरश्च यो भवेत् ।
किं तारतम्यमुभयोर्विचारे सति सिध्यति ॥१२०॥
किं तु युष्मन्मते जीवा दोषा अपि च तद्गताः ।
सत्या एवेशदृष्ट्यापि तेषां दुःखादिकं च यत् ॥१२१॥
ततो भवन्मते दोषा बहवः प्राङ् निरूपिताः ।
नैर्घृण्यप्रमुखा ईशे क्लृप्ता इति विशिष्यते ॥१२२॥
नास्मन्मते तु ते दोषास्तद्दृष्ट्यास्य मृषात्वतः ।
किं च प्रारब्धतन्त्रत्वं दुःखादीनां यतो मतम् ॥१२३॥
जीवत्वं जीवदोषाश्च ब्रह्मदृष्ट्या मृषैव हि ।
नित्यबुद्धतया तच्च स्वे महिम्न्येव तिष्ठति ॥१२४॥
चोरोत्पादकता सत्या विभौ क्लृप्ता भवन्मते ।
अस्माकं चोरता मिथ्या तस्मादस्मन्मतं वरम् ॥१२५॥

दुष्टोत्पादकता सत्या विभौ क्लृप्ता भवन्मते।
अस्माकं दुष्टता मिथ्या तस्मादस्मन्मतं वरम् ॥१२६॥
जीवत्वं जीवदोषाश्च भ्रान्तदृष्टयैव केवलम्।
ब्रह्मदृष्ट्या न सन्त्येव तद्दोषैर्नैव लिप्यते ॥१२७॥
विरुद्धश्चिन्मयो ह्यात्मा देहादिजडसंघतः ।
तयोः परस्पराध्यासे मिथ्यात्वमुचितं भ्रमे ॥१२८।
भ्रमजन्यस्य बन्धस्य मिथ्यात्वमपि निश्चितम्।
यथा स्वप्ने कृतं चौर्यं तद्दण्डाद्यपि वै मृषा ॥१२९॥
यत्पापाचरणं स्वप्ने दुःखभोगश्च पुष्कलः ।
जाग्रद्दृष्ट्या विलासोऽसौ स्वप्नगस्तु प्रबाध्यते ॥१३०॥
जाग्रत्स्वप्नगयोर्भेदो वस्तुतो न तथापि तु ।
विलासमात्रं तद्दृष्ट्या तद्दोषैर्न तु लिप्यते ॥१३१॥
ईशदृष्ट्या प्रपञ्चोऽयं विलासायैव केवलम् ।
न दोषैर्लिप्यतेऽत्रत्यैः सोऽस्य साक्ष्येव संस्मृतः ॥१३२॥
स्वैकांशकल्पितं विश्वं पश्यन्साक्षितया स्थितः।
न स्वस्वरूपाच्च्यवते ह्यनन्तमहिमा विभुः ॥१३३॥
पादोऽस्य सर्वभूतानि पादत्रयमथामृतम् ।
अस्यैकांशो जीववर्ग इति शास्त्रेषु गीयते ॥१३४॥
निरंशे वस्तुतो ब्रह्मण्यौपाधिक्यंशकल्पना ।
निरंशेऽपि यथा व्योम्नि घटाकाशादिकल्पना॥१३५॥

कवीनामपि वै प्राचामतर्क्यो महिमा हरेः ।
क उत्कर्षो भवेत्तस्य यद्यस्मद्बुद्धिगोचरः ॥ १३६ ॥
ईशदृष्ट्या विलासोऽसौ यज्जीवैरिह भुज्यते ।
जाग्रद्दृष्ट्या विलासो हि भुज्यते स्वप्नगेन यत् ॥ १३७ ॥
अखिलैर्जीवगैर्धर्मैर्नेश्वरोऽण्वपि लिप्यते ।
तस्य दृष्ट्या मृषा ते हि नित्यबुद्धस्वभाविनः ॥ १३८ ॥
नित्यबुद्धस्वरूपस्य दृष्ट्या भगवतस्त्विमे ।
मृषैव जीवगा धर्मा न स तैर्लिप्यते क्वचित् ॥ १३९ ॥
नित्यशुद्धो नित्यबुद्धो नित्यमुक्तश्च वै विभुः ।
अकामोऽव्यसनी चैव वेदान्तेष्वेव कथ्यते ॥ १४० ॥
नरैः[1] संसारिभिस्तुल्यः सृजतीशोऽपि वै प्रजाः ।
इति प्रवदतां पक्षे बहुदोषाः प्रदर्शिताः ॥ १४१ ॥
भवद्भिरैश्वरं कृत्यं तर्क्यमाणं स्वया धिया ।
समीकृतं नृणां कृत्यैर्ननु दोषाकुलीकृतम् ॥ १४२ ॥
अस्माभिर्नित्यतृप्तस्य निर्विकारस्य वै हरेः ।
मायाया अप्रतर्क्याया विलासः कश्चिदिष्यते ॥ १४३ ॥
च्युतते वाच्युतस्यापि गुणिते वागुणस्य च ।
अतर्क्यानन्तशक्तेर्हि स्थाने तदिति मन्महे ॥ १४४ ॥
अच्छित्त्वैव यथात्मानमीशो त्रैविध्यमुच्यते ।
तथाप्यहीनमेकत्वं तद्वदस्याप्यतर्क्यता ॥ १४५ ॥

---

१ एतदादिश्लोकाष्टकम् आ पुस्तके पश्चिमशोधरूपेण लिखितं दृश्यते.

अग्राह्यो यत्कुबुद्धीनां मुह्यतीव च यन्मनः ।
अतर्क्येशमाहिम्नोऽसौ न भारः किं तु भूषणम् ॥ १४६ ॥
भेदबुद्ध्या भगवतः कुर्वतामप्युपासनाम् ।
स्वर्गादिस्वसु नार्थित्वात् स्वार्था सा भक्तिरुच्यते ॥ १४७ ॥
ईशांशभावनायुक्ता ईश्वरं य उपासते ।
अन्ते ईशैक्यताप्राप्तेस्तानीशैकरतान्विदुः ॥ १४८ ॥
तस्मादीशस्य माहात्म्यं यथा वेदान्तदर्शने ।
अत्यन्तनिर्मलं शुद्धं न तथान्यत्र वर्ण्यते ॥ १४९ ॥
एकः शुद्धः परात्मैव वैषम्यादिमलोज्झितः ।
न चात्रेशस्य भोगेच्छानन्दरूपस्य कथ्यते ॥ १५० ॥
अवाप्तकाम ईशोऽत्र कथ्यते व्यसनोज्झितः ।
पारमार्थिकरूपेण व्यवहारदृशा त्वथ ॥ १५१ ॥
तत्तत्कर्मानुसारेण स्वमायाशक्तिसंयुतः ।
सर्वस्रष्टाखिलेशानो भगवान्प्रतिपाद्यते ॥ १५२ ॥
तस्मादीशस्य महिमा यादृगस्मिन्मते स्थितः ।
न तथा दृश्यतेऽन्यस्मिन्बहुदोषावहे मते ॥ १५३ ॥

---

१ अत्र अ पुस्तकस्था टिप्पणी– "द्वैतसमयेषु हि परमात्मनो भूयो गुणदारिद्र्यमाप्नोति, इह तु अज्ञत्वं विज्ञत्वं सर्वज्ञत्वं निर्गुणता सगुणता निःसीमगुणता अनैश्वर्यमैश्वर्यं सर्वैश्वर्यमित्यादि सर्वं सुसंपन्नम् । नन्वज्ञत्वादीनां दोषाणां किमिति श्लाघ्या संपत्तिः ?—– शृणु । सापेक्षा हि गुणता दोषता च भावानां, सर्वसमश्च परमात्मा न दोषाणामपेक्षावधिर्न गुणानामिति सर्वमिदं तस्यैश्वर्यमिति श्लाघ्या तद्वत्ता तस्य । स चैष व्यवहार एव । परमार्थतस्तु अज्ञत्वादिसर्व (ज्ञ) त्वान्तं सर्वमेव कार्त्स्निकमिति नादस्तस्योत्कृष्टतामपकृष्टतां वावहति । यथा दारुमयः सिंहः सहोदरो वा न साध्वसस्य न वा प्रेम्णः, तद्वत । " इति.

नन्तु चेन्मायया देवः सृजत्येतच्चराचरम् ।
अन्यसाहाय्यतस्तस्माद्धीयेत महिम्ना विभोः ॥ १५४ ॥
मैवम्—
विष्णोरेव हि सा शक्तिर्यासौ मायेति भाष्यते ।
हीयते नैव माहात्म्यं स्वकार्यं कुर्वतस्तया ॥ १५५ ॥
अन्यथा परमेशोऽयं रक्षत्यन्नादिना प्रजाः ।
इति प्रवदतां शास्त्रं दुष्येत भवतां न किम् ॥ १५६ ॥
आत्मीयेन प्रभावेन न किं शक्नोति रक्षितुम् ।
यदन्नाद्यै रक्षतीति स्याच्छङ्का भवतामपि ॥ १५७ ॥
एवं तत्त्वस्य सूक्ष्मत्वाज्जायन्ते बहुसंशयाः ।
समाधानं तु सर्वेषां शास्त्रग्रन्थेषु पश्यत ॥ १५८ ॥
इदमत्यन्तममलं खलु वेदान्तदर्शनम् ।
स्वबुद्धिकल्पितैर्दोषैर्न त्यक्तुं युज्यते क्वचित् ॥ १५९ ॥
गम्भीरः शास्त्रविषयो न ग्राह्योऽल्पमनीषया ।
न च दूषयितुं योग्यः स्वबुद्धिकृतनिश्चयैः ॥ १६० ॥
प्रसिद्धं सहसा बुद्धेः सूक्ष्मार्थानवबोधनम् ।
तया ज्ञायेत चेत्तत्त्वं गाम्भीर्यं नाम किं ततः ॥ १६१ ॥
आस्माकीनधियः शास्त्रतत्त्वस्य च परस्परम् ।
वैजात्यं परमं तस्माद्युज्यते संशयोद्भवः ॥ १६२ ॥
गूढमेवैश्वरं तत्त्वं सहसा चेन्न बुध्यते ।
वेदान्तस्यात्र को दोषः किमन्धैर्दूष्यते रविः ॥ १६३ ॥

नृविजातीयरूपस्य नृविजातीयसंविदः ।
अप्रतर्क्यकृते रूपं सहसा ज्ञायतां कथम् ॥ १६४ ॥
अत एकान्तभावेन जगतां पतिरच्युतः ।
उपास्यः कीर्तनीयश्च स यच्छत्यात्मसंविदम् ॥ १६५ ॥
नन्वेवं यदि वेदान्तशास्त्रमेवास्ति सत्तमम् ।
तद्विरुद्धानि काणादसाङ्ख्यादीनि न सन्ति किम् ॥ १६६ ॥
मैवम्—
मन्दानां तत्त्वबोधाय शाखादिभिरिवोडुराट् ।
बहुप्रकारैरीशोऽपि साङ्ख्यादिभिरुदीर्यते ॥ १६७ ॥
शुद्धं भगवतो रूपमाह वेदान्तदर्शनम् ।
न तावता विरोधोऽस्ति प्रागेवैतन्निरूपितम् ॥ १६८ ॥
साक्षात्तु प्रापकोऽस्त्येष मार्गः शुद्धाधिकारिणाम् ।
तद्द्वारा प्रापकास्त्वन्ये मार्गा मन्दाधिकारिणाम् ॥ १६९ ॥
तस्माच्छास्त्रीयविषयानग्राह्यानल्पया धिया ।
न जातु दूषयेत्प्राज्ञः स्वस्याज्ञानं तु तर्कयेत् ॥ १७० ॥
यथार्थभगवद्रूपबोधकं दृढहेतुमत् ।
गम्भीरं च प्रसन्नं च शास्त्रमस्माकमेव हि ॥ १७१ ॥
दोषान्वदन्तु वा केचित् स्तुवन्तु यदि वापरे ।
अस्माकं तु दृढा भक्तिर्जायते वैदिके मते ॥ १७२ ॥
वेदानां भारतादेश्च वाचः प्रागल्भ्यभूषणाः ।
विभान्ति मानसेऽस्माकं श्रद्धाया जन्मभूमयः ॥ १७३ ॥

अहो मानवशास्त्रादेर्भारतादेस्तथैव च ।
वाचां प्रागल्भ्यमस्माकं हृदयान्नापसर्पति ॥ १७४ ॥
पठद्भिर्मानवं शास्त्रं भारतादिकमेव वा ।
पुरः श्वःश्रेयसस्याध्वा मूर्तिमानिव लक्ष्यते ॥ १७५ ॥
भारतादिवचोभानुः समुदेति यदा तदा ।
स्वत एव विलीयन्ते कुतर्कतमसां गणाः ॥ १७६ ॥
दृश्यन्ते बहवो ग्रन्था बह्वलङ्कारमिश्रिताः ।
तेभ्योऽपि कोऽपि महिमा भारतादेर्विशिष्यते ॥१७७॥
यथा यथा भवद्भिश्च प्रोच्यते तत्र दूषणम् ।
गाम्भीर्यनिश्चयद्वारा भूयः श्रद्धा विवर्धते ॥ १७८ ॥
हन्तास्मदीयं शास्त्रं ये त्यजन्ति लघुदर्शनाः ।
दोषाभासाकुलहृदस्तेभ्यः खिद्याम्यहं भृशम्॥ १७९ ॥
गूढतत्त्वस्य शास्त्रस्य कस्तत्त्वज्ञोऽस्त्यनीश्वरः ।
अहो साहसमस्त्येतत्तत्र दोषप्रकल्पनम् ॥ १८० ॥
नूनं प्राग्जन्मकर्मैव सदसद्बुद्धिकारणम् ।
अन्यथा स्यात्कथं नाम वैमुख्यं मङ्गलावहे ॥ १८१ ॥
शान्ताः पवित्रा मङ्गल्या हृत्प्रसादविधायिनः ।
यथा ते वैदिका धर्मा नैव सन्ति तथेतरे ॥ १८२ ॥
नमो भगवते तुभ्यं विष्णवेऽतर्क्यशक्तये ।
पवित्रे वैदिके धर्मे श्रद्धां त्वामर्थयामहे ॥ १८३ ॥

शालिवाहनशाकाब्दे रसषट्सप्तभू १ ७ ६ ६ मिते ।
काश्यां निष्ठामसौ प्राप्तः शास्त्रतत्त्वविनिर्णयः ॥ १ ८ ४ ॥
अन्यासामपि सर्वासां शङ्कानामुत्तरं त्विह ।
सूक्ष्मरूपेण संदिष्टं बुध्यतां बुद्धिमत्तरैः[1] ॥ १ ८ ५ ॥
यस्येश्वरे परा भक्तिः श्रद्धा शास्त्रे च निश्चला ।
तस्यैतेऽर्थाः प्रकाशन्ते इह प्रोक्ता महात्मनः ॥ १ ८ ६ ॥

इति षष्ठस्याध्यायस्योत्तरार्धम् ।

इति नीलकण्ठस्य कृतौ शास्त्रतत्त्वविनिर्णये स्वमतदोषाशङ्कानिराकरणं नाम षष्ठोऽध्यायः ॥ ६ ॥[2]



१ अत उत्तरमन्तिमस्य पत्रस्य नष्टत्वाद् ग्रन्थभागो नास्ति आ पुस्तके.

२ अत उत्तरम् " ॐ नमो नारायणाय सर्वात्मा श्रीसीताराम लिखिता तद्भक्त नाना अत्रि ॥ छ ॥ " इत्यधिकम् अ पुस्तके.

**PUBLICATIONS**
of
## The Scindia Oriental Institute
**UJJAIN**

1. तत्वसार (Marathi)—composed in 1312 A. C. by Cāṅgadeva Vaṭeśvara, a contemporary of the celebrated Marathi poet and saint Jñāneśvara. This unique work was discovered and published by the Institute in 1936. Editor : **Dr. H. R. Diwekar**, M. A., D. Litt., Sāhityācārya. Crown 8vo, 105 pages with 2 photoprints. —Rupee One
2. अलङ्कारमञ्जूषा (Scindia Oriental Series No. 1)— a Sanskrit treatise on poetic figures by Devaśaṅkara Purohita (*c.* 1765 A. C.). The illustrative verses eulogise some Peshwas of Poona. Editor : **Sadashiva L. Katre**, M.A. Demy 8vo, 384 pages. —Rupees four
3. **Ancient Jaina Hymns** (Scindia Oriental Series No. 2) —containing a Middle Gujarati and seven Sanskrit rare stotras composed by authors of the Śvetāmbara Jaina sect. Editor : **Dr. Charlotte Krause**, Ph. D. —In Press
4. शास्त्रतत्त्वविनिर्णयः (Scindia Oriental Series No. 3)— a Sanskrit rejoinder to John Muir's *Mataparīkṣā* by Nīlakaṇṭha (Father Nehemiah Goreh). This work refuting the doctrines of Christianity and defending those of Hinduism was composed by the author *c.* 1844 A.C., i.e. four years before his conversion. Editor : **Sadashiva L. Katre**, M. A. Demy 8vo 136 pages. —Rupees five

5. अविमुक्ततत्त्वम्—A Sanskrit compendium on the philosophy of the holy city of Banaras, ascribed to Bhavānī, the step-mother of the renowned author Bālambhaṭṭa Pāyaguṇḍe (*c.* 1780 A. C.). —In progress

---

1. CATALOGUE OF MANUSCRIPTS IN THE INSTITUTE'S LIBRARY

Part I (1936)—Annas four
Part II (1941)—Annas four

Further parts in preparation.

2. DESCRIPTIVE CATALOGUE OF MANUSCRIPTS IN THE INSTITUTE'S LIBRARY

—10,000 entries. —In progress

---

**Vikrama Volumes** in commemoration of the completion of the 2nd millennium of the Vikrama Era published under the auspices of the Institute.

1. **Vikrama Volume (English)—Rs. 15/-**
2. विक्रम-स्मृति-ग्रन्थ (Hindi) —Rs. 20/-
3. विक्रमस्मृति (Marathi) —Rs. 10/-

---

Postage etc. extra in all cases.

The three Vikrama Volumes are obtainable from the Director of Archæology, M. B., Gwalior Fort.

*For the rest, apply to:—*

The Curator
**Scindia Oriental Institute**
**UJJAIN** (M. B.—India)